७. वाभ्रम् । वभ्रः । बृहती । पवमानस्सोमः ।

सोमउष्वाणस्सो । हाऽ३हाऽ३इ । तूऽ२३४ । भिस्तुभोवा ॥ अधाहोऽ२इ । ष्णुभाइहोऽ२ । आवाऽ१इनाऽ२म् । आश्वयेव । हराइताया । तिवाउवाऽ३ । ऊऽ३४पा । रयाऽ२ ॥ मान्द्राऽ२यायाऽ२ ॥ तिधा । राऽ२याऽ२३४औहोवा ॥श्रीः॥ मन्द्रयायातिधा । हाऽ३हाऽ३इ । राऽ२३४ । यारयोवा ॥ मन्द्राहोऽ२इ । यायाहोऽ२ । ताइधाऽ१रायाऽ२ । आनूपेगो । मान्गो । भिराउवाऽ३ । ऊऽ३४पा । अद्याऽ२ः ॥ सोमोऽ२दुग्धाऽ२ ॥ भिराऽ२ । द्याऽ२३४औहोवा ॥ श्रीः ॥ सोमोदुग्धाभिरा । हाऽ३हाऽ३इ । आऽ२३४ । क्षाःस्थिक्षोवा ॥ सोमोहोऽ२इ । दुग्धाहोऽ२ । भाइराऽ१-क्षाऽ२ः । सामुद्रन्न । संवाराणा । नियाउवाऽ३ । ऊऽ३४पा । अग्माऽ२न् ॥ मान्दीऽ२मादाऽ२ ॥ यतो । शाऽ२ताऽ२३४औहोवा ॥ ऊऽ३२३४पा ॥

दी. २६. उत्. ५. मा. २३. डि. ॥८७॥

८. अग्नेस्त्रिणिधनम् ॥ अग्निः । बृहती । पवमानस्सोमः ।

सोमउष्वा ॥ णस्सोतूऽ२३४भीः । अधाइष्णुभिराऽ३१उवाऽ२३ । वीऽ२३४नाम् ॥ आश्वायेऽ२३४वा ॥ हरितायातिधाऽ३१उवाऽ२३ । राऽ२३४या ॥ मान्द्रायाऽ२३४या ॥ तिधाऽ३१उवाऽ२३ ॥ राऽ२३४या ॥ श्रीः ॥ मन्द्रयाया ॥ ताइधाराऽ२३४या । मन्द्रयायातिधाऽ३१उवाऽ२३ । राऽ२३४या ॥ आनूपेऽ२३४गो ॥ मान्गोभिराऽ३१उवाऽ२३ । आऽ२३४-क्षाः ॥ सोमोदूऽ२३४ग्धा ॥ भिराऽ३१उवाऽ२३ ॥ आऽ२३४द्याः ॥श्रीः॥

सोमोदुग्धा ॥ भाइराऽ२३४क्षाः । सोमोदुग्धाभिराऽ३१उवाऽ२३। आऽ२३४-
क्षाः ॥ सामूद्राऽ२३४न्ना ॥ संवरणानियाऽ३१उवाऽ२३ । आऽ२३४-
ग्मान् ॥ मान्दीमाऽ२३४दा ॥ यतोऽ३आउवाऽ२३ ॥ शाऽ२३४ते ॥
दी. १३. उत्. ५. मा. २१. ण. ॥८८॥

९. शैशवम् ॥ शिशुः । गायत्री । पवमानस्सोमः ।

यत्सोमचित्रमुक्थायाम् ॥ दिव्यंपार्थिवंवसू ॥ तन्नःपूऽ२३४ना ॥
नआऽ३भाऽ५"राऽ६५६ ॥श्रीः॥ वृषापुनानआयूंषी ॥ स्तनयन्नधिवर्हिषाइ ॥
हरिस्साऽ२३४न्यो ॥ निमाऽ३साऽ५"दाऽ६५६ः ॥ श्रीः ॥ युवंहिस्थस्सु-
वःपाती ॥ इन्द्रश्चसोमगोपताइ ॥ ईशानाऽ२३४पी ॥ प्यताऽ३न्धा-
ऽ५"याऽ६५६ः ॥
दी. ९. उत्. ८. मा. ७. दे. ॥८९॥

१०. सन्तनि ॥ देवाः । गायत्री । पवमानस्सोमः ।

असाहाउ ॥ वायंशुर्माऽ३१उवाऽ२३ । दाऽ२३४या । अप्सुदक्षो-
गिरिष्ठाऽ१ः ॥ श्येनोहाउ ॥ नायोनिमाऽ३१उवाऽ२३ । साऽ२३४दात् ॥
श्रीः ॥ शुभ्रमन्धोदेववातमप्सुधौतन्नृभिस्सुताऽ१म् ॥ स्वदाहाउ ॥
ताइगावःपाऽ३१उवाऽ२३ ॥ योऽ२३४भीः ॥ श्रीः ॥ आदोमश्वन्न हेतारम-
शूशुभन्नमृतायाऽ२३४५ ॥ मघोहाउ ॥ रासंसधाऽ३१उवाऽ२३ ॥
माऽ२३४दे ।
दी. १४. उत्. २. मा. १३. थि. ॥९०॥

११. च्यावनम् ॥ च्यवनः । ककुप् । पवमानस्सोमः ।

अभाऽ२३४इ । द्युम्नम् । बृहाऽ२३४द्यशाऽ६ः । हाउ ॥ आइषस्पाऽ२३४-
ताइ । दिदीहिदेववदेवाऽ२३४ंहाइ । वाइकोशाऽ३म्माऽ३ ॥ ध्यामा-

ऽ२३९हाऽ३४३इ ॥ यूऽ२३४वोऽ६"हाइ ॥ श्रीः ॥ विकोऽ२३४ । शम्म । ध्यमाऽ२३४य्युवाऽ६ । हाउ ॥ आवच्याऽ२३४स्वा । सुदक्षचमुवोस्सुतो-ऽ२३४हाइ । वाइशांवाऽ३ह्वाऽ३इः ॥ नावाऽ२३हाऽ३४३इ ॥ श्पाऽ२३४-तोऽ६"हाइ ॥ श्रीः ॥ विशाऽ२३४म् । वह्निः । नवाऽ२३४इश्पतोऽ६ः । हाउ ॥ वार्ष्टिन्दाऽ२३४इवाः । पवस्वरीतिमापोऽ२३४हाइ । जाइन्वान्गा-ऽ३वाऽ३इ ॥ द्यायाऽ२३हाऽ३४३इ ॥ धाऽ२३४योऽ६"हाइ ॥

दी. ५. उत्. ३. मा. २९. बो. ॥९१॥

१२. क्रोशम् ॥ इन्द्रः । उष्णिक् । पवमानः सोमः ।

प्राणा । शिशुर्महो । नाम् । होईऽ२ । हो । वाहोइ । हिन्वन्नृतस्य-दीधिताइम् । विश्वापाऽ१राऽ२३इ ॥ प्रीऽ३याभूऽ३वात् ॥ अधाऽ२३-द्विताऽ३४३ ॥श्रीः॥ उपा ॥ त्रितस्यपा । ष्योः । होईऽ२ । हो । वाहोइ । अभक्तयद्गुहापदाम् । यज्ञास्याऽ१साऽ२३ ॥ साऽ३धामाऽ३भाइः ॥ अधा-ऽ२३प्रियाऽ३४३म् ॥ श्रीः ॥ त्रीणी ॥ त्रितस्यधार । या । होईऽ२ । हो । वाहोइ । पृष्ठेष्वैरयद्रयाइम् । मिमाइतेऽ१आऽ२३ ॥ स्याऽ३योजा-ऽ३ना ॥ विस्रूऽ२३क्रतूऽ३४३ः । ओऽ२३४५इ ॥ डा ॥

दी. १५. उत्. ९. मा. २२. भा. ॥९२॥

१३. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ।

पव । स्ववाऽ३ । जसातयाइ ॥ पवित्रेधारयासुताऽ२३ः । आइन्द्रायसोऽ३१२३ । मवाऽ५इष्णवाइ ॥ दाइवेभ्योमाऽ३१२३ ॥ धुमोवा । ताऽ५रोऽ६"हाइ ॥ श्रीः ॥ तुवाम् । रिहाऽ३ । तिधीतयाः ॥

हरिंपवित्रेअद्रुहाऽ२३ः । वात्संजाताऽ३१२३म् । नमाऽ५तराः ॥ पाव-
मानाऽ३१२३ । विघोवा । माऽ५णोऽ६"हाइ ॥श्रीः॥ तुवम् । द्याश्वाऽ३ ।
महित्रता । पृथिवीश्वातिजश्रिषाऽ२३इ । प्रातिद्रापाऽ३१२३इम् । अमू-
ऽ५श्वथाः ॥ पावमानाऽ३१२३ ॥ महोवा । त्वाऽ५नोऽ६"हाइ ॥

दी. १७. उत्. न. मा. २०. यौ. ॥९३॥

१४. पार्थम् ॥ पृथुर्वैन्यः । अनुष्टुप् । पवमानस्सोमः ।

ओऽ३होऽ३होइ । पव । स्ववाऽ२ । जसाताऽ२३४याइ ॥ पवि ।
त्रेघाऽ२ । रयास्तुऽ२३४ताः ॥ इन्द्रा । यसोऽ२ । मवाइष्णाऽ२३४वाइ ॥
देवे । भ्योमाऽ२३ । धुमाऽ३त्ताऽ५"राऽ६५६ः ॥श्रीः॥ तुवाम् । रिहाऽ२ ।
तिधाइताऽ२३४याः ॥ हरिम् । पवाऽ२इ । त्रेअद्रूऽ२३४हाः ॥ वत्सम् ।
जाताऽ२म् । नमाताऽ२३४राः ॥ पव । मानाऽ२३ । विधाऽ३मोऽ५"णा-
ऽ६५६इ ॥ श्रीः ॥ तुवम् । द्याश्वाऽ२ । महित्राऽ२३४ता ॥ पृथि ।
वीश्वाऽ२ । तिजश्रीऽ२३४षाइ ॥ प्रति । द्रापाऽ२इम् । अमुश्वाऽ२३४थाः ॥
ओऽ३होऽ३होइ । पव । मानमऽ२३ । महाऽ३इत्वाऽ५"नाऽ६५६ ॥

दी. १३. उत्. न. मा. २४. री. ॥९४॥

१५. दाशस्पत्यम् ॥ दाशस्पतिः । त्रिष्टुप् । पवमानस्सोमः ।

इन्दुरौहोवाहाईया ॥ वाजाउ । वाऽ३ । हाउवा । पवतेगोनि-
योघाउ । वाऽ३ । हाउवा । इन्द्राइसोमः । सहइन्वाउ । वाऽ३ ।
हाउवाऽ३ । माऽ२दाऽ२३४औहोवा । याऽ२३४५ ॥ हन्ताइरक्षो । बाधाता-

इपाउ । वाऽ३ । हाउवाऽ३ ॥ योऽ२राऽ२३४औहोवा । तीऽ२३४५म् ॥ वराइवस्क्र । ण्वन्नृजनाउ । वाऽ३ । हाउवाऽ३ ॥ स्याऽ२राऽ२३४-औहोवा ॥ जाऽ२३४५ ॥ श्रीः ॥ अधौहोवाहाईया । धाराउ । वाऽ३ । हाउवा । यामधुवापृचानाउ । वाऽ३ । हाउवा । तिरोरोम । पवाताआउ । वाऽ३ । हाउवाऽ३ । द्राऽ२इदूऽ२३४औहोवा । ग्धाऽ२३४५ः ॥ इन्दूरा-इन्द्रा । स्यसाखीयाउ । वाऽ३ । हाउवाऽ३ ॥ जूऽ२षाऽ२३४औहोवा । णाऽ२३४५ः ॥ देवोदाइवा । स्यमात्साराउ । वाऽ३ । हाउवाऽ३ ॥ माऽ२दाऽ२३४औहोवा । याऽ२३४५ ॥ श्रीः ॥ अभौहोवाहाईया ॥ व्रताउ । वाऽ३ । हाउवा । निपवतेपुनानाउ । वाऽ३ । हाउवा । देवोदाइवान् । स्वेनारासाउ । वाऽ३ । हाउवाऽ३ । नाऽ२पाऽ२३४-औहोवा । चाऽ२३४५न् ॥ इन्दूर्धामो । णियातूंथाउ । वाऽ३ । हाउ-वाऽ३ ॥ वाऽ२साऽ२३४औहोवा । नाऽ२३४५ः ॥ दशाद्वाइपो । अव्यातासाउ । वाऽ३ । हाउवाऽ३ ॥ नोऽ२आऽ२३४औहोवा ॥ व्या-ऽ२३४५इ ॥

दी. ४१. उत्. २३. मा. ६२. गा. ॥६५॥

१६. सञ्जयम् । इन्द्रः । पङ्क्तिः । अग्निः ।

आतेअग्नइधी । माऽ२हाइ । द्युमन्ताऽ३इन्देवअजरम् ॥ यद्धस्याते-पनीयसी । समिद्दीदयताइ । हुम्ऽ३स्थिहुम् । द्याऽ२३४वी ॥ श्रीः ॥

आतेअग्नऋचा । हाऽ३वाइः । शुक्रस्याऽ३ज्योतिषस्पताइ ॥ सुश्चन्द्रदस्म- विश्पतेहव्यवाट्तुभ्यश्हू । हुम्ऽ३स्थिहुम् । याऽ२३४ताइ ॥ श्रीः ॥ ओभे- सुश्चन्द्रवि । श्पाऽ३ताइ । दर्वीश्राऽ३इणीषआसन ॥ उतोनउत्पुपूर्याउक्थेषु- शवसा । हुम्ऽ३स्थिहुम् । पाऽ२३४ताइ ॥ इषश्स्तोतृभ्याऽ३आ । हुम्- ३स्थिहुम्ऽ३४३ । भाऽ३४५रोऽ६"हाइ ॥ दी. २५. उत्. न. मा. २९.वो. ॥९६॥

१७. सौमित्रम् ॥ सुमित्रः कुत्सः । उष्णिक् । इन्द्रः ।

औहोहोइ । औऽ३होऽ३इ । ओऽ३२३४५वाऽ६५६ । इन्द्राऽ२- यसामगायताऽ२३४५ ॥ विप्राऽ२यबृहतेबृहाऽ१त् ॥ ब्रह्मकृतेऽ२विपश्चिते- ऽ२३४५ ॥ एऽ३ । पनस्यवेऽ२३४५ ॥श्रीः॥ त्वमिन्द्राभिभूरसीऽ२३४५ ॥ त्वश्सूर्यमरोचयाऽ२३४५ः ॥ विश्वकर्माविश्वदेवाऽ२३४५ः । एऽ३ ॥ महाश्असाऽ२३४५इ ॥श्रीः॥ विभ्राजञ्ज्योतिषासुवाऽ२३४५ः ॥ अगच्छो- रोचनन्दिवाऽ१ः ॥ देवास्तइन्द्रसख्यायाऽ२३४५ ॥ औहोहोइ । औऽ३- होऽ३इ । ओऽ३२३४५वाऽ६५६ ॥ एऽ३ । येमिराऽ२३४५इ ॥

दी. २३. उत्. ९. मा. १३. हि. ॥९७॥

१८. महावैश्वामित्रम् । विश्वामित्रः । अनुष्टुप् इन्द्रः ।

हयाइ । हयाऽ३ । ओहाओहा (त्रीणि त्रिः) असाविगो । महन्द्रा- ताऽ२इ ॥ शविष्ठधा । प्ता वागांहीऽ२ ॥ आत्वापृणा । क्रुइन्द्रायाऽ२म् ॥ रजस्सूर्यो । नरश्माइभाऽ२इः ॥ श्रीः ॥ आतिष्ठवा । बृहन्गाथाऽ२म् ॥ युक्तातेआ । ह्मणाहारीऽ२ । अर्वाचीनाम् । सुतेमानाऽ२ः । ग्रावाकृणो । तुवन्नूनाऽ२ ॥ श्रीः ॥ इन्द्रमिद्धा । रीवहाताऽ२ः ॥ अप्रतिधा । दृशवा-

साऽ२म् ॥ ऋषीणाऽ२म् । ष्टुतीरूपाऽ२ ॥ यज्ञश्चमा । नुषाणाऽ२म् । यज्ञश्चा । मानुषाणाऽ२म् । हयाइ । हयाऽ३ । ओहाओहा । (त्रीणि त्रिः) होऽ४इडा । होऽ४इडा । होऽ२३४५इ ॥ डा ॥

दी. १९. उत्. १. मा. २९. तो. ॥९८॥

१९. इषोवृधीयम् ॥ प्रजापतिः । गायत्री । पवमानस्सोमः ।

इन्द्रायेन्दाउ ॥ मरुत्वताइ । पवस्वामाऽ२ । धुमत्तमाः ॥ अर्कस्यायोऽ२ ॥ निमा । साऽ२दाऽ२३४औहोवा ॥श्रीः॥ तन्त्वाविप्राः ॥ वचोविदाः । परिष्काण्वीऽ२ । तिधर्णसाइम् ॥ सन्त्वामार्जाऽ२ ॥ तिआ । याऽ२वाऽ२३४औहोवा ॥ श्रीः ॥ रसन्तेमाइ ॥ त्रोअर्यमा । पिवन्तूवाऽ२ । रुणःक्रवाइ ॥ पवमानाऽ२ ॥ स्यम । रूऽ२ताऽ२३४औहोवा ॥ इषोवृधेऽ१ ॥

दी. १६. उत्. १६. मा. १४. की. ॥९९॥

२०. क्रौञ्चम् ॥ क्रौञ्चः । गायत्री । पवमानस्सोमः ।

इन्द्रायेन्दाऽ१औहो ॥ माऽ३रुत्वाऽ२३४ताइ । पावस्वामा । धूऽ३म । ताऽ२३४माः । पवस्वमधुमाऽ३२ । ताऽ२३४माः ॥ अर्कस्ययोनाऽ२३इम् । अ । वाहाइ ॥ साऽ२३४दाम् । एहियाऽ६हा ॥श्रीः॥ तन्त्वाविप्राऽ१औहो ॥ वाऽ३चोवीऽ२३४दाः । पारिष्काण्वा । ताऽ३इध । णाऽ२३४साइम् । परिष्कृण्वन्तिधाऽ३२ । णाऽ२३४साइम् ॥ सन्त्वामृजन्ताऽ२३इ । अ । वाहाइ ॥ याऽ२३४वाः । एहियाऽ६हा ॥श्रीः॥ रसन्तेमाऽ१औहो ॥ त्रोऽ३अर्याऽ२३४मा । पाइवन्तूवा । रूऽ३णः । काऽ२३४वाइ । पिवन्तु-

वरुणाऽ३२: । काऽ२३४वाइ ॥ पवमानस्याऽ२३ । म । वाहाइ ॥ रूऽ२३४ताः । एहियाऽ६हा । होऽ५इ ॥ डा ॥

दी. १०. उत्. ३. मा. २८. वै ॥१००॥

तृतीयस्यार्द्धःप्रपाठकः ॥

पञ्चमो विंशः ।

१. वाजदावर्यः॥ वाजदावर्यः । गायत्री । पवमानस्सोमः ।

इन्द्रायेन्दाउ ॥ मरूऽ२त्वाऽ२३४ताइ । पवाऽ२स्वाऽ२३४मा । धुमत्ताऽ२माः ॥ आऽ२३र्का ॥ स्याऽ२यो । निमोऽ२३४वा । साऽ५दो-ऽ६"हाइ ॥ श्रीः ॥ तन्त्वाविप्राः ॥ वचोऽ२वीऽ२३४दाः । पराऽ२इष्का-ऽ२३४ण्वा । तिघर्णाऽ२साइम् ॥ साऽ२३न्त्वा ॥ माऽ२र्जा । तियो-ऽ२३४वा । याऽ५वोऽ६"हाइ ॥श्रीः॥ रसन्तमाइ ॥ त्रोआऽ२र्याऽ२३४मा । पिवाऽ२न्तूऽ२३४वा । रुणःकाऽ२वाइ ॥ पाऽ२३वा ॥ माऽ२ना । स्यमोऽ२३४वा । रूऽ५तोऽ६"हाइ ॥ दी. ९. उत्. ६. मा. १४ पी. ॥१०१॥

२. औदणोरन्ध्रम् । उद्दणोरन्ध्रःकाव्यः । बृहती । पवमानस्सोमः ।

मृज्यमानाः ॥ सुहस्तियाऽ३ । सामूऽ३द्राइवा । चमिन्वसाऽ३इ । रायीऽ३म्पाइशा । गम्बहुलाऽ३म् । पूरूऽ२स्पृऽ२३४हाम् ॥ पवमा । ना । औऽ३हो ॥ भियोऽ२३४वा । पाऽ५सोऽ६"हाइ ॥श्रीः॥ पवमाना ॥ भियर्षसाऽ३इ । पावाऽ३माना । भियर्षसाऽ३इ । पूनाऽ३नोवा । रेपवमाऽ३ । नोआऽ२व्याऽ२३४याइ ॥ वृपोअ । चा । औऽ३हो ॥ क्रदोऽ२३४वा ।

वाऽ५नोऽ६"हाइ ॥ श्रीः ॥ वृषोअचाइ ॥ क्रदद्वनाऽ३इ । वार्षोऽ३आचाइ । क्रदद्वनाऽ३इ । दाइवाऽ३नाऽ२सो । मपवमाऽ३ । ननाऽ२इष्काऽ२३४त्तोम् ॥ गोभिर । जा । औऽ३हो ॥ नओऽ२३४वा । षाऽ५सोऽ६"हाइ ॥

दी. ८. उत्. ३. मा. २४. डी. ॥१०२॥

३. ऐडमौक्ष्णोरन्ध्रम् ॥ उक्ष्णोरन्ध्रः काव्यः । बृहती । पवमानस्सोमः ।

मृज्यमानस्सुहस्त्या । समुद्रेवोवा ॥ चामिन्वसि । रायिंपिशाऽ३ । हाऽ३हा । गंबहुलंपुरुस्पृहम् ॥ पवमानाऽ३ । हाऽ३हा ॥ भियर्षाऽ२३सा-ऽ३४३इ ॥श्रीः॥ पवमानाभियर्षसि । पवमानोवा ॥ भायर्षसि । पूनानो-वाऽ३ । हाऽ३हा । रेपवमानोअव्यये ॥ वार्षोअचाऽ३इ । हाऽ३हाइ ॥ क्रदद्वाऽ२३नाऽ३४३इ ॥ श्रीः ॥ वृषोअचिक्रदद्वने । वृषोअचोवा ॥ क्राद्-द्वने । दाइवानाऽ२सोऽ३ । हाऽ३हा । मपवमाननिष्कृतम् ॥ गोभाइरञ्जाऽ३ । हाऽ३हा ॥ नोअर्षाऽ२३साऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. २२. उत्. ७. मा. १५. छु. ॥१०३॥

४. वाजजित् । प्रजापतिः । बृहती । पवमानस्सोमः ।

मृज्यमानस्सुहा ॥ स्तियाऽ२ । समूऽ२हो । द्रेवाऽ२हो । चामिन्व-साइ । रयाऽ२इऽ२होइ । पिशाऽ२हो । गंबहुलाम् । पूरुस्पृहाम् ॥ पवाऽ२हो । मानाऽ२हो ॥ भीयर्षसाऽ३१उवाऽ२३ ॥ श्रीः ॥ पवमा-नाभिया ॥ षसाऽ२इ । पवाऽ२हो । मानाऽ२हो । भीयर्षसाइ । पुनाऽ२हो । नोवाऽ२हो । रेपवमा । नोअव्ययाइ ॥ वृषोऽ२होइ । अचाऽ२इहोइ ॥

क्रादद्वनाऽ३१उवाऽ२३ ॥श्रीः॥ वृषोअचिक्रदात् ॥ वनाऽ२इ । वृषोऽ२होइ ।
अचाऽ२इहोइ । क्रादद्वनाइ । देवाऽ२हो । नाऽ२सोऽ२हो । मपवमा ।
नानिष्कृताम् ॥ गोभाऽ२इहोइ । अज्ञाऽ२हो ॥ नोअर्षसाऽ३१उवाऽ२३ ॥
वाजीजिगीऽ३वऽ५ऽ१ ॥ दी. २३. उत्. १४. मा. २६. हू. ॥१०४॥

५. वरुणसाम ॥ वरुणः । बृहती । पवमानस्सोमः ।

मृज्यमानस्सुहस्त्योवा । ओवा ॥ सामुद्रेवा । चमाइन्वाऽ१सीऽ२ ।
राऽ२३यीम् । पाऽ२३इशा । गंबहुलम् । पुरूऽ२३हाइ । स्पृहाऽ३मा ॥
पवमानाभियर्षसि । पाऽ२३वा ॥ मानाभियौऽ३ । होऽ३१२३४ । वा ।
षाऽ५सोऽ६"हाइ ॥ श्रीः ॥ पवमानाभियर्षसोवा । ओवा ॥ पावमाना ।
भियार्षाऽ१साऽ२इ । पूऽ२३ना । नोऽ२३वा । रेपवमा । नोआऽ२३हाइ ।
व्ययाऽ३आ ॥ वृषोअचिक्रदद्वने । वाऽ२३र्षो ॥ आचिक्रदौऽ३ । हो-
ऽ३१२३४ । वा । वाऽ५नोऽ६"हाइ ॥श्रीः॥ वृषोअचिक्रदद्वनोवा । ओवा ॥
वार्षोअचि । क्रदाद्वाऽ१नाऽ२इ । दाऽ२३इवा । नाऽ२३ऽसो । मपवमा ।
ननाऽ२३हाइ । कृताऽ३मा ॥ गोभिरज्ञानोअर्षसि । गोऽ२३भाइः ॥
आज्ञानऔऽ३ । होऽ३१२३४ । वा । षाऽ५सोऽ६"हाइ ॥
दी. २२. उत्. ६. मा. २२. चा. ॥१०५॥

६. अङ्गिरसां गोष्ठः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

हाउहाउहाउवा । मृज्यमानस्सुहस्त्या । इहा । उपाऽ२३४५ ॥
समुद्रेवाचमिन्वसि । इहा । उपाऽ२३४५ ॥ रयिंपिशङ्गंबहुलंपुरुस्पृहम् ।
इहा । उपाऽ२३४५ ॥ पवमानाभियर्षसि । इहा । उपाऽ२३४५ ॥ श्रीः ।
पवमानाभियर्षसि । इहा । उपाऽ२३४५ ॥ ( त्रीणि । द्विः ) ॥
पुनानोवारेपवमानोअव्यये । इहा । उपाऽ२३४५ ॥ वृषोअचिक्रदद्वने ।
इहा । उपाऽ२३४५ ॥ श्रीः ॥ वृषोअचिक्रदद्वने । इहा । उपाऽ२३४५ ।
(त्रीणि । द्विः ) देवानांसोमपवमाननिष्कृतम् । इहा । उपाऽ२३४५ ॥
हाउहाउहाउवा । गोभिरञ्जानोअर्षसि । इहा । उपाऽ२३४५ ॥

दी. ३१. उत्. ५. मा. १३. ङि. ॥१०६॥

७. इहवद्वामदेव्यम् । वामदेवः । गायत्री । पवमानस्सोमः ॥

एतमुत्यंदशक्षिपः । इहा ॥ मृजन्तिसिन्धुमातराऽ२म् । इहा ॥
समादित्येभिराऽ२ । इहाऽ३ ॥ ख्याऽ२३४तोऽ६"हाइ ॥श्रीः॥ समिन्द्रेणो-
तवायुना । इहा ॥ सुतएतिपवित्रआऽ२ । इहा ॥ संसूर्यस्यराऽ२ । इहाऽ३ ॥
श्मिाऽ२३४इभोऽ६"हाइ ॥ श्रीः ॥ सनोभगायवायवे । इहा । पूष्णेपवस्व-
मधुमाऽ२न् । इहा ॥ चारुर्मित्रेवरूऽ२ । इहाऽ३ ॥ णाऽ२३४-
इचोऽ६"हाइ ॥

दी. १८. उत्. ४. मा. १०. ढौ. ॥१०७॥

८. वारवन्तीयम् ॥ इन्द्रः । गायत्री । इन्द्रः ॥

रेवतीर्नौहोहाइ ॥ साधामाऽ२३४दाइ । इन्द्राइसाऽ२३४हा । तुतुविचाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४जाः ॥ क्षुमन्तः । या"भिर्मदाऽ३४ । औहोवा । इहाऽ२३४हाइ । औहोऽ३१२३४ । मा । एहियाऽ६हा ॥ श्रीः ॥ आघत्वावाऽ२औहोहाइ ॥ त्मानायूऽ२३४क्ताः । स्तोतृभ्योऽ२३४हाइ । धृष्णवीयाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४नाः ॥ ऋणोर । क्षा"न्नचक्राऽ३४ । औहोवा । इहाऽ२३४-हाइ । औहोऽ३१२३४ । योः । एहियाऽ६हा ॥श्रीः॥ आयद्दुवाऔहोहाइ ॥ शातक्राऽ२३४ताउ । आकामाऽ२३४ऽहाइ । जरितृऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४णाम् ॥ ऋणोर । क्षा"न्नशचाऽ३४ । औहोवा । इहाऽ२३४हाइ । औहोऽ३१२३४ । भीः । एहियाऽ६हा । होऽ५इ ॥डा॥

दी. ३४. उत्. ६. मा. २५. धु. ॥१०८॥

९. तृतीयं वैदन्वतम् ॥ विदन्वान्भार्गवः । गायत्री । पवमानस्सोमः ॥

पाऽ५रि । स्वानोऽ३गाऽ३इरिष्ठाः ॥ पवित्रेसो । मोअक्षरात् । पवित्रे । सोमोऽ२३ । ऽारात् ॥ श्रीः ॥ तूऽ५वम् । विप्राऽ३स्तूऽ३-दंकवाइः ॥ मधुप्रजा । तमन्वसाः । मधुप्रजा । तमाऽ२३ । धासाः ॥ श्रीः ॥ तूऽ५वे । विश्वेऽ३साऽ३जोषसाः । देवासस्पाइ । तिमाशता । देवासस्पी । तिमाऽ२३ । शाता । ओइ । मदौ । वाऽ३४३ओऽ३४वा ॥

षुवा ॥ सवंघाः । असाइ । माऽ२दाऽ२३४औहोवा ॥ एऽ३ । पुसर्व-
घाअसीऽ२३४५ ॥ दी. १७. उत्. ९. मा. १८. फै. ॥१०९॥

१०. आद्यं वैदन्वतम् ॥ विदन्वान्भार्गवः । गायत्री । पवमानस्सोमः ॥

पारी ॥ स्वानोगिरिष्ठाः । पवाऽ२इत्रेऽ२३४सो । मोअक्षाराऽ२त् ॥
श्रीः ॥ तूवाम् ॥ विप्रस्त्वंकविः । मधूऽ२प्राऽ२३४जा । तमन्धासाऽ२ः ॥
श्रीः ॥ तूवे ॥ विश्वेसजोषसः । देवाऽ२साऽ२३४ऽपी । तिमाशाताऽ२ ॥
मदाइषूसाऽ३ । ईऽ३याऽ३ ॥ वंघोऽ२३४वा । आऽ५सोऽ६"हाइ ॥
दी. ८. उत्. ५. मा. १०. णौ. ॥११०॥

११. चतुर्थं वैदन्वतम् ॥ विदन्वान्भार्गवः । गायत्री । पवमानस्सोमः ।

औऽ३होइ । इहहाहहाइ । औऽरहोऽ२३४वा । पराइस्वा-
ऽ२३४नो । गिराऽ२३४इष्ठाः ॥ पावित्रेऽ२३४सो । मोअक्षाऽ२३४रात् ॥
श्रीः ॥ तुवंवाऽ२३४इप्रः । तुवंकाऽ२३४वीः ॥ मधुप्राऽ२३४जा ।
तमन्धाऽ२३४साः ॥ श्रीः ॥ तुवेवाऽ२३४इश्वे । सजोषाऽ२३४साः ॥
देवासाऽ२३४ऽपी । तिमाशाऽ२३४ता ॥ मदाइषूऽ२३४सा । वंघाआ-
ऽ२३४सी ॥ औऽ३होइ । इहहाहहाइ । औऽरहोऽ२३४५वाऽ६५६ ॥
एऽ३ । उपाऽ२३४५ ॥ दी. ३. उत्. न. मा. ३७. रे. ॥१११॥

१२. दीर्घम् । भरद्वाजः । यवमध्या गायत्री । पवमानस्सोमः ॥

साह्व ॥ न्वेयोवसू॒ऽ२३नाम् । योराऽ२यामाऽ२ । नेतायइडा-ऽ२३नाम् ॥ सोऽ२३माः ॥ यस्सुक्षिताऽ२३४इनोऽ६"हाइ ॥ श्रीः ॥ सोमाः । यस्सुक्षिताऽ२३इनाम् । यास्याऽ२ताईऽ२ । द्र॒ऽपिबाव्रस्य-मरूऽ२३ताः । यास्याऽ२ताईऽ२ । द्र॒ऽपिबाव्रस्यमरूऽ२३ताः ॥ याऽ२३-स्या ॥ वार्यमणाभाऽ२३४गोऽ६"हाइ ॥ श्रीः ॥ यास्या ॥ वार्यमणाभा-ऽ२३गाः । आयेऽ२नामीऽ२ । त्रावरुणाकरामाऽ२३हाइ । आयेऽ२नामीऽ२ । त्रावरुणाकरामाऽ२३हाइ ॥ आऽ२३इन्द्राम् ॥ अवसेमाऽ२३४होऽ६"हाइ ॥

दी. १७. उत्. ३. मा. २०. जौ. ॥११२॥

१३. कार्णश्रवसम् ॥ कर्णश्रवा आङ्गिरसः । उष्णिक् । पवमानस्सोमः ॥

ताऽ२३४म्वः । साऽ२३४खा ॥ योमदाऽ२३या । पूनानम । भिगायाऽ२३ता ॥ शाइशुन्नह । व्यौः स्वदयाऽ२३ ॥ तगूर्तिभाऽ३४३इः ॥ श्रीः ॥ साऽ२३४म्व । रसाऽ२३४ई ॥ वमातृऽ२३भाइः । आइन्दुर्हिन्वा । नोअज्याऽ२३ताइ ॥ दाइवावीर्म । दोमतिभाऽ२३इः ॥ परिष्कृताऽ३४३ः ॥ श्रीः ॥ आऽ२३४यम् । दाऽ२३४क्षा ॥ यसाधाऽ२३नाः । आयश्-शुद्धो । यपीताऽ२३याइ ॥ आयन्देवे । भ्योमधुमाऽ२३ । तरस्सुता-ऽ३४३ः । ओऽ२३४५इ ॥डा॥

दी. १.७. उत्. ६. मा. १९. चो. ॥११३॥

१४. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ।

सोमाः । पवाऽ३ । तइन्दवाः । अस्मभ्यङ्गातुवित्तमाऽ२३ः । माइत्रास्वानाऽ३१२३ः । अरेऽ५पसाः ॥ स्वाधियाऽ३१२३ः ॥ सुवोवा । वाऽ५इदोऽ६'हाइ ॥ श्रीः ॥ तेपू । तासोऽ३ । विपश्चिताः ॥ सोमासोद-दध्याशिराऽ२३ः । सूरासोनाऽ३१२३ । दर्शाऽ५तासाः ॥ जाइगत्वा-ऽ३१२३ः ॥ ध्रुवोवा । घाऽ५र्तोऽ६"हाइ ॥ श्रीः ॥ सुष्वा । णासोऽ३ । वियद्रिभाइः ॥ चितानागोरधित्वचाऽ२३इ । आइषमस्माऽ३१२३ । भ्यमा-ऽ५भिताः ॥ सामस्वराऽ३१२३न् ॥ वसोवा । वाऽ५इदोऽ"६हाइ ॥

दी. २१. उत्. न. मा. २४. ही. ॥११४॥

१५. मधुश्चुन्निधनम् ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

सोमाऽपवन्तइन्दवाऽ३ए ॥ अस्मभ्यङ्गाऽ३तूवित्तमाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ । मित्रास्वानाऽ३आरेपसाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ॥ स्वाधियाऽ३ः । हाऽ३हाइ । औऽ३होऽ३वा । आइहीऽ२ ॥ सुवः । वाऽ२इदाऽ२३४औहोवा ॥ श्रीः ॥ तेपूतासोविपश्चिता-ऽ३ए ॥ सोमासोदऽ३धाआशिराऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ । सूरासोनऽ३दार्शतासाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ॥ जाइगत्वाऽ३ः । हाऽ३हाइ । औऽ३होऽ३वा ॥ आइहीऽ२ ॥ ध्रुवाः । घाऽ२र्ताऽ२३४औहोवा ॥श्रीः॥ सुष्वाणासोवियद्रिभा-ऽ३इरे ॥ चितानागोऽ३राधित्वचाऽ३ । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ । इषमस्मऽ३भ्यामभिताऽ३ः । हाऽ३हा । औऽ३होऽ३वा ।

आइहीऽ२ ॥ सामस्वराऽ३न् । हाऽ३हाइ । औऽ३होऽ३वा । आइहीऽ२ ॥
वसु । वाऽ२इदाऽ२३४औहोवा । मधुश्रुताऽ२३४५: ॥

दी. ३३. उत्. ४. मा. ३५. डु. ॥११५॥

१६. वाङ्निधनं क्रौञ्चम् ॥ कुङ् । अनुष्टुप् । पवमानस्सोमः ॥

सोमाऽपावाऽ३१२३४ । तइ । दवाऽ३: ॥ अस्मभ्यंगाऽ३१२३४ ।
तुवि । तमाऽ३: ॥ मित्रास्वानाऽ३१२३४: । अरे । पसाऽ३: ॥
सुवाधीयाऽ३१२३: ॥ सुवाऽ५विंदाउ ॥ श्रीः ॥ तेपूतासोऽ३१२३४ ।
विपः । चिताऽ३: ॥ सोमासोदाऽ३१२३४ । धिया । शिराऽ३: ॥
सूरासोनाऽ३१२३४ । दर्श । तासाऽ३: ॥ जिगात्नावाऽ३१२३: ॥ ध्रुवा-
ऽ५घृताउ ॥ श्रीः ॥ सुष्वाणासोऽ३१२३४ । विय । द्रिभाऽ३इ: ॥
चितानागोऽ३१२३४: । अधि । त्वचाऽ३इ ॥ इषामास्माऽ३१२३४ ।
भ्यम । भिताऽ३: ॥ समास्वाराऽ३१२३न् ॥ वसूऽ५विदाउ ॥ वा ॥

दी. ११. उत्. १२. मा. २०. खौ. ॥११६॥

१७. ऐडं क्रौञ्चम् । कुङ् । अनुष्टुप् । पवमानस्सोमः ॥

सोमाऽपवन्तइन्दवाः ॥ अस्माभ्यंगा । तुवित्तमाः । माइत्राओ-
ऽ२३४वा । स्वानाअरेपसाऽ२३४५: ॥ सुवाधियाः ॥ सुववाऽ२३इदा-
ऽ३४३: ॥ श्रीः ॥ तेपूतासोविपश्चिताः ॥ सोमासोदा । धियाशिराः ।
सूराओऽ२३४वा । सोनदर्शतासाऽ२३४५: ॥ जिगत्नवाः ॥ ध्रुवाघाऽ२३-

ताऽ३४३इ ॥ श्रीः ॥ सुष्वाणासोवियद्रिभाइः ॥ चितानागोः । अधित्व-
चाइ । आइषाओऽ२३४वा । अस्मभ्यमगिताऽ२३४५ः ॥ समस्वरान् ॥
वसुवाऽ२३इदाऽ३४३ः । ओऽ२३४५इ ॥६॥

दी. २०. उत्. ९. मा. २७. मे. ॥११७॥

१८. औष्ठम् ॥ स्तुष्टिः । त्रिष्टुप् । पवमानस्सोमः ॥

औहोहाइ । अयोहाइ ॥ पवापवस्वेनावसूऽ२३नो । औऽ३होइ ।
इहा । ईऽ३या । माऽ४श्वत्वइन्दोसरसिप्रधाऽ२३न्वा । औऽ३होइ । इहा ।
ईऽ३या ॥ ब्रध्नश्चिद्यस्यवातोनजूऽ२३तीम् । औऽ३होइ । इहा । ईऽ३या ॥
पुरुमेधाश्चित्तकवेनराऽ२३न्धात् । औऽ३होइ । इहा । ईऽ२ । याऽ२३४ ।
औहोवा ॥ श्रीः ॥ औहोहाइ । उतोहाइ ॥ नएनापवयापवाऽ२३स्वा ।
औऽ३होइ । इहा । ईऽ३या । अधिश्रुतेश्रवाययिस्यताऽ२३इर्थाइ । औऽ३-
होइ । इहा । ईऽ३या ॥ षष्टिस्सहस्रानैगुतोवसूऽ२३नी । औऽ३होइ ।
इहा । ईऽ३या ॥ वृक्षन्नपक्वन्धूनवद्रणाऽ२३या । औऽ३होइ । इहा । ईऽ२ ।
याऽ२३४ । औहोवा ॥ श्रीः ॥ औहोहाइ । महोहाइ ॥ मेअस्यवृषनाम-
शूऽ२३षाइ । औऽ३होइ । इहा । ईऽ३या । माऽ४श्वत्वेवापृशनेवावधाऽ२३-
त्राइ । ओऽ३होइ । इहा । ईऽ३या ॥ अस्वापयन्निगुतस्नेहयाऽ२३चा ।
औऽ३होइ । इहा । ईऽ३या ॥ अपामित्राँ४ अपाचितोअचाऽ२३इताः ।
औऽ३होइ । इहा । ईऽ२ । याऽ२३४ । औहोवा ॥ एऽ३ । दीदिहीऽ१ ॥

दी. ४२. उत्. ११, मा. ३१. च. ॥११८॥

१९. गूर्द्ः ॥ प्रजापतिः । द्विपदा विराट् । अग्निः ॥

ओग्नाइ ॥ त्वन्नोऽ२३ग्रा । हुम्माऽ२३ । ताऽ२३४माः । उत-
त्रातशिवोसुवाऽ२३४५ः ॥ शिवोसुवाऽ२३ः ॥ वरोवा । थाऽ५योऽ६"हाइ ॥
श्रीः ॥ वासूः ॥ अ । ग्नाइर्वाऽ२३सू । हुम्माऽ२३ । आऽ२३४वाः ।
अच्छानक्षिद्युमत्तमाऽ२३४५ः । द्युमत्तमाऽ२३ः ॥ रयोवा । आऽ५इन्दो-
ऽ६"हाइ ॥ श्रीः ॥ तान्त्वा ॥ शो । चाइष्ठाऽ२३दी । हुम्माऽ२३इ ।
दीऽ२३४वाः । सुम्नायनूनमीमहाऽ२३४५इ ॥ नमीमहाऽ२३इ ॥ सखोवा ।
भाऽ५योऽ६"हाइ ॥ दी. १०. उत्. ५. मा. १९. मो. ॥११९॥

२०. उद्वंँशपुत्रः ॥ प्रजापतिः । द्विपदा विराट् । इन्द्रः ॥

प्रवाः ॥ आइन्द्रायवृत्रहान्तमाऽ२३या ॥ वाइप्रायगाथंगाऽ१या-
ऽ३ता ॥ याञ्जुजोवाऽ३ । उप् । षाऽ२तोऽ३५"हाइ ॥श्रीः॥ अर्चा ॥
ताअर्कम्मरुतास्सुवाऽ२३काः ॥ आस्तोभतिश्रुतोऽ१यूऽ३वा ॥ सआऽ३२-
उवाऽ३ । उप् । आऽ२इन्द्रोऽ३५"हाइ ॥ श्रीः ॥ उपा ॥ प्राक्षेमधुमता-
इक्षियाऽ२३न्ताः ॥ पूष्येमरयिन्धाऽ१इमाऽ३हाइ ॥ तआऽ३२उवाऽ३ ।
उप् । आऽ२इन्द्रोऽ३५"हाइ ॥ दी. ६. उत्. ३. मा. १८. गै. ॥१२०॥

॥ इति तृतीयः प्रपाठकः ॥

॥ षष्ठो विंशः ॥

१. सन्तनि ॥ देवाः । गायत्री । पवमानस्सोमः ॥

वृषाहाउ ॥ पावस्वधाऽ३१उवाऽ२३ । राऽ२३४या । मरुत्वते-
चमत्सराऽ१ः ॥ विश्वाहाउ ॥ दाधानओऽ३आउवाऽ२३ ॥ जाऽ२३४-
सा ॥ श्रीः ॥ तन्त्वाधर्तारमोण्योऽपवमानसुवर्दृशाऽ२३४५म् ॥ हिन्वेहाउ ॥
वाजेषुवाऽ३१उवाऽ२३ ॥ जाऽ२३४इनाम् ॥श्रीः॥ अयाचित्तोविपानयाहरि-
ऽपवस्वधारयाऽ२३४५ ॥ युजाऽहाउ ॥ वाजेषुचोऽ३आउवाऽ२३ ॥
दाऽ२३४या ॥ दी. १४. उत्. २. मा. १५. थु. ॥१२१॥

२. एडॅसौपर्णम् ॥ सुपर्णः ॥ गायत्री । पवमानस्सोमः ।

वृषापवोवा ॥ स्वाधाराऽ२३४या । मरूत्वताइ । चमाऽ२त्सा-
२३४राः ॥ वाऽ२इश्वा । दाऽ२३धा ॥ नाओजसा । औऽ३होवा ॥श्रीः॥
तन्त्वाधर्त्तोवा ॥ रामोणाऽ२३४योः । पवामाना । सुवाऽ२र्दृऽ२३४शाम् ॥
हाऽ२इन्वे । वाऽ२३जाइ ॥ षूवाजिनाम् । औऽ२३होवा ॥ श्रीः ॥ अया-
चित्तोवा ॥ वाइपानाऽ२३४या । हराइऽपवा । स्वधाऽ२राऽ२३४या ॥
यूऽ२जाम् । वाऽ२३जाइ ॥ षूचोदया । औऽ३होवा । होऽ५इ ॥डा॥
दी. ७. उत्. ६. मा. १४. झी. ॥१२२॥

३. रोहितकूलीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

वृषापवस्वधा ॥ रयाऽ२ । मरुत्वतेचमत्साऽ२३राः ॥ वाइश्वाऽ२-
दाधाऽ२३ ॥ नओऽ२३४वा । जाऽ५सोऽ६"हाइ ॥श्रीः॥ तन्त्वाधर्त्तारमो ॥
णियोऽ२ः । पवमानसुवर्दृऽ२३शाम् ॥ हाइन्वेऽ२वाजाऽ२३इ ॥ षुवोऽ२३४-
वा । जाऽ५इनोऽ६"हाइ ॥श्रीः॥ अयाचित्तोविपा ॥ नयाऽ२ । हरि-पवस्व-

धाराऽ२३या ॥ यूजाऽ२म्वाजाऽ२३इ ॥ षुचोऽ२३४वा । दाऽ५योऽ६"हाइ ॥

दी. ८. उत्. ८. मा. १२. डा. ॥१२३॥

४. कण्वरथन्तरम् ॥ कण्वः । बृहती । पवमानस्सोमः ॥

पूनानस्सोमधारया ॥ अपोवसा । नोऽ२आर्षाऽ२सी । आरत्न-धायोनिमृतस्यसीदसाऽ२३४ऐही ॥ उत्सोदाऽ२३४इवाः ॥ हिराऽ३१-उवाऽ२३ ॥ एऽ३ । रययश्रा ॥श्रीः॥ ऊत्सोदेवोहिरण्ययाः ॥ उत्सोदेवो । हाऽ३इराण्याऽ३याः । दुहानऊधर्दिवियंमधुप्रियाऽ२३४मैही ॥ प्रत्न२सा-ऽ२३४धा ॥ स्थमाऽ३१उवाऽ२३ ॥ एऽ३ । सददा ॥श्रीः॥ प्रात्न२सधस्थ-मासदात् ॥ प्रत्न२सधा । स्थाऽ३मासाऽ३दात् । आपृच्छ्यंधरुणंवाजि-यर्षसाऽ२३४ऐही ॥ नृभिर्यौऽ२३४ताः ॥ विचाऽ३१उवाऽ२३ । एऽ३ । क्षणआ ॥

दी. २५. उत्. ९. मा. १७. भे. ॥१२४॥

५. गौङ्गवम् ॥ अग्निः । बृहती । पवमानस्सोमः ॥

पुनानाऽ३स्सोमधारया ॥ आपोऽ२ । वसानोआऽ३ । षासाइ । आरत्नधायोनिमाऽ२३र्ताऽ२ । स्यसाऽ३इदासाइ । आरत्नधायोनिमृत । स्य-साऽ३इदासाइ ॥ ऊत्सोदे । वा । औऽ३हो ॥ हिरोऽ२३४वा । ण्याऽ५यो-ऽ६"हाइ ॥ श्रीः ॥ उत्सोदाऽ३इवोहिरण्ययाः ॥ ऊत्सोऽ२ । देवोहिराऽ३ । ण्यायाः । दुहानऊधर्दिवाऽ२३याऽ२म् । मधूऽ३प्रायाम् । दुहानऊधर्दि-वियम् । मधूऽ३प्रायाम् ॥ प्रात्न२स । धा । औऽ३हो ॥ स्थमोऽ२३४वा । साऽ५दोऽ६"हाइ ॥ श्रीः ॥ प्रत्न२साऽ३धस्थमासदात् ॥ प्रात्नाऽ२म् । सध-

स्थमाऽ३ । सादात् । आपृच्छ्यंधरुणाऽ२३म्वाऽ२ । जियाऽ३र्षासाइ ।
आपृच्छ्यंधरुणंवा । जियाऽ३र्षासाइ ॥ नृभिर्धौ । ता । औऽ३हो ॥ विचो-
ऽ२३४वा । क्षाऽ५णोऽ६"हाइ ॥ दी. २६. उत्. ९. मा. २३. घि. ॥१२५॥

६. साप्तमिकमायास्यम् ॥ अयास्य आङ्गिरसः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया। एऽ३ । औऽ३होऽ५वा ॥ आपोऽ३ । वसाऽ२ ।
नश्राऽ३४५ । षाऽ३सीऽ२३४५ । आरत्नधाः । योनिमृता । स्यासाऽ३आ ।
औऽ३होऽ३ । दाऽ२३४सी ॥ उत्साऔऽ३हो ॥ दाइवोऽ२ । हिराऽ३४५ ॥
ण्याऽ३याऽ२३४५ः ॥ श्रीः ॥ उत्सोदेवोहिरण्ययः । एऽ३ । औऽ३-
होऽ५वा ॥ ऊत्सोऽ३ । दाइवोऽ२ । हिराऽ३४५ । ण्याऽ३याऽ२३४५ः ।
दूहानऊ । धार्दिवियाम् । माधूऽ३आ । औऽ३होऽ३ । प्रीऽ२३४याम् ॥
प्रत्नाऔऽ३हो ॥ साधाऽ२ । स्थमाऽ३४५ ॥ साऽ३दाऽ२३४५त् ॥ श्रीः ॥
प्रत्न॰सधस्थमासदत् । एऽ३ । औऽ३होऽ५वा ॥ प्रात्नाऽ३म् । सधाऽ२ ।
स्थमाऽ३४५ । साऽ३दाऽ२३४५त् । आपृच्छियाम् । धारुणंवा । जाया-
ऽ३आ । औऽ३होऽ३ । षाऽ२३४सी ॥ नृभाऔऽ३हो ॥ धौतोऽ२ ।
विचाऽ३४५ ॥ क्षाऽ३णाऽ२३४५ः ॥ दी. ९. उत्. ३. मा. २२. दा. ॥१२६॥

७. प्रवद्भार्गवम् ॥ भृगुः । जगती । पवमानस्सोमः ॥

प्रोअयासाइत् । इन्दुरिन्द्रा । स्याऽ२निष्कृताम् ॥ सखासख्यूः ।
नप्रमिना । ताऽ२इसङ्गिराम् ॥ मर्यइवा । युवतिभाइः । साऽ२मर्षताइ ॥

सोमऽकला । शेशतया । माऽ२नापथाऽ३१उ ॥श्रीः॥ प्रवोधियो । मन्द्रयुवो ।
वाऽ२इपन्युवाः । पनस्युवाः । संवरणाइ । पूऽ२चक्रमूः ॥ हरिंक्रीडा ।
तमभ्यनू । पाऽ२तस्तुभाः ॥ अभिधेना । वऽपयसाइत् । आऽ२शिश्रयूऽ३-
राउ ॥ श्रीः ॥ आनस्सोमा । संयतंपाइ । प्यूऽ२पीमिषाम् ॥ इन्दोपवा ।
स्वपवमा । नाऽ२ऊर्मिणा ॥ यानोदोहा । तेत्रिरहान् । आऽ२सश्चुपाइ ॥
क्षुमद्वाजा । वन्मधुमात् । सुऽ२वीरियाऽ३माउ । वाऽ२३४५ ॥

दे. [illegible]. उत्. २४. मा. २८. मै. ॥१२७॥

८. अभिनिधनं काण्वम् ॥ कण्वः । बृहती । इन्द्रः ॥

औहोहोहाइ । आइहो । वायाम् ॥ घाऽ२३४त्वा । सुतावा-
ऽ२३४न्ताः । आपोनाऽ२३४वृ । क्तावर्हिषाः । एहोइ । आऽ२३४इही ।
पावित्राऽ२३४स्या । आस्तावाऽ२३४णे । पृवृत्रहान् । एहोइ । आऽ२३४इही ।
पारिस्तोऽ२३४ता ॥ रआऽ३साऽ५ताऽ६५६इ ॥श्रीः॥ औहोहोहाइ । आइही ।
स्वारा ॥ ताऽ२३४इत्वा । सुतेनाऽ२३४राः । वासोनाऽ२३४इरे ।
काउक्थिनाः । एहोइ । आऽ२३४इही । कादासूऽ२३४ताम् । तापोणा-
ऽ२३४ओ ॥ काआगमाः । एहोइ । आऽ२३४इही ॥ आइन्द्रास्वा-
ऽ२३४ब्दी ॥ ववाऽ३साऽ५वाऽ६५६ः ॥श्रीः॥ औहोहोहाइ । आइ[illegible] ।
काण्वे ॥ भाऽ२३४इद्धां । ण्णावाघाऽ२३४पांत् । [illegible] ।
ऽाहस्त्रिणाम् । एहोइ । आऽ२३४इही । पाइशंगाऽ२३४रू । पंमाधा-

ऽ२३४वान् । वीचर्षणाइ । ऐहोइ । आऽ२३४इही । मावूगोऽ२३४मा ॥ तमाऽ३इमाऽ५हाऽ६५६इ ॥ आऽ२३४मी ॥

दी. १६. उत्. १५. मा. ४३. ङि. ॥१२८॥

९. वैखानसम् ॥ वैखानसाः । बृहती । इन्द्रः ।

नकिष्टाऽ३म्कर्मणानशात् ॥ यश्चाकारा । सदावृधाऽ२३म् । सदावृधाम् । इन्द्रान्नया । ज्ञैविश्वगू । तमाऽ२भ्र्वसाऽ२३म् ॥ तमृभ्वसाम् ॥ अधाष्टन्धा । ष्णुमोजसाऽ२३ ॥ ष्णुमोजसाऽ३४३ ॥श्रीः॥ अधृष्टाऽ३न्धृष्णुमोजसा ॥ अधाष्टधा । ष्णुमोजसाऽ२३ ॥ ष्णुमोजसा । अषाढमू । ग्रंपृतना । सुसाऽ२सहाऽ२३इम् । सुसामहीम् ॥ यस्माइन्महाइः । उरुज्रयाऽ२३ः । उरुज्रयाऽ३४३ः ॥श्रीः॥ यस्मिन्माऽ३हीरुरुज्रयाः ॥ यस्माइन्महाइः । उरुज्रयाऽ२३ः । उरुज्रयाः । संधाइनवो । जायमाने । अनोऽ२नवृऽ२३ः । अनोनवूः ॥ द्यावाःस्थिक्षामाइः । अनोनवृऽ२३ः ॥ अनोनवृऽ३४३ः । ओऽ२३४५इ ॥डा॥ दी. १९. उत्. ९. मा. २८. धै. ॥१२९॥

१०. दक्षणिधनमौक्षम् ॥ भरद्वाजः । गायत्री । पवमानस्सोमः ॥

यस्तेमदोवरेणियः । ओहोवा ॥ इहश्रुधाइ । तेनापाऽ२३वा । स्वअन्धसा ॥ देवावाऽ२३इराऽ३ । [illegible]हाइ ॥ घशाऽ२साऽ२३४५हाऽ६५६ ॥श्रीः॥ जघ्निर्वृत्रममित्रियम् । ओहोवा ॥ इहश्रुधाइ । सस्निर्वाऽ२३जाम् । दिवेदिवाइ ॥ गोपाताऽ२३इराऽ३ । होवाऽ३हा ॥ श्वसाआऽ२३४५साऽ६५६इ ॥श्रीः॥ संमिश्लोअरुषोभुवः । ओहोवा ॥ इहश्रुधाइ । सूपस्थाऽ२३भीः । नधेनुभाइः ॥ सीदन्छ्याऽ२३इनाऽ३ः । होवाऽ३-

हाइ ॥ नयोनाऽ२३४५इमाऽ६५६ ॥ दक्षाऽ३याऽ२३४५ ॥

दी. २३. उत्. ६. मा. २२ ढा. ॥१३०॥

११. शाकरम् ॥ शर्करः । ककुप् । पवमानस्सोमः ॥

एपाऽ३स्यधारयासुताः ॥ एपस्यधारयाऽ१सूऽ३ताः । अव्यावारे-
भिऽपा । वताऽ३इमाऽ३दिन्तमः ॥ भिऽपा । वताऽ३इमाऽ३दिन्तमः ॥
क्रीडानूऽ२ । माऽ२३इः । अपाऽ३माऽ५इ"वाऽ६५६ ॥ श्रीः ॥ क्रीडाऽ३-
नूर्मिरपामिवा ॥ क्रीडन्नूर्मिरपाऽ१मीऽ३वा । यउस्रियाअपाइ । याआऽ३-
न्ताऽ३रश्मनि ॥ अपाइ । याआऽ३न्ताऽ३रश्मनि ॥ निर्गाआऽ२ ।
काऽ२३ । तदोऽ३जाऽ६"साऽ६५६ ॥ श्रीः ॥ निर्गाऽ३अक्रन्तदोजसा ॥
निर्गाअक्रन्तदोऽ१जाऽ३सा । अभिव्रजन्तत्नाइ । षेगाऽ३व्याऽ३मश्वियम् ॥
तत्नाइ । षेगाऽ३व्याऽ३मश्वियम् ॥ वर्मीवाऽ२ । धाऽ२३ । ष्णावाऽ३-
रूऽ५"जाऽ६५६ ॥

दी. २१. उत्. ४. मा. २२. चा. ॥१३१॥

१२. सवः । वसिष्ठः । उष्णिक् । पवमानस्सोमः ॥

हा । वोऽ३हा । वोऽ३हाऽ३ । हा । ओऽ२३४वा । हाइ ।
साखायाऽ२३४आ । नीषीदाऽ२३४ता ॥ पूनानाऽ२३४या । प्राऽ२३४गा ।
याऽ२३४ता ॥ शाइशुन्नाऽ२३४या । ञ्जैऽपाराऽ२३४इभू ॥ षाऽ२३४त ।
श्राऽ२३४याइ ॥ सामीवाऽ२३४त्साम् । नामातुऽ२३४भाइः ॥ साजाताऽ-
२३४गा । याऽ२३४सा । घाऽ२३४नाम् ॥ दाइवावाऽ२३४याम् । मादामा-
ऽ२३४भी ॥ द्वाऽ२३४इशा । वाऽ२३४साम् ॥ श्रीः ॥ पूनाताऽ२३४दा ।

क्षासाघाऽ२३४नाम् ॥ याथाशाऽ२३४र्द्धो । याऽ२३४वी । ताऽ२३४-
याइ ॥ याथामाऽ२३४इत्रा । यावारूऽ२३४णा ॥ याऽ२३४श ॥ ताऽ२३४-
माम् । हा । वोऽ३हा । वोऽ३हाऽ३ । हा । ओऽ२३४वा । हाऽ३४ ।
औहोवा ॥ एऽ३ । अतिविश्वानिदुरितातरेमाऽ२३४५ ॥

दी. ६. उत्. न. मा. १७. हे. ॥१३२॥

१३. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

पुरः । जिताऽ३इ । वोअन्धसाः ॥ सुतायमादयित्नवाऽ२३इ ।
आपश्वानाऽ३१२३म् । श्नथाऽ५इष्टना ॥ साखायोदाऽ३१२३इ ॥ घजोवा ।
ह्वाऽ६योऽ६"हाइ ॥ ॥श्रीः॥ सखा । योदाऽ३इ । घजिह्वियाम् ॥ योधार-
यापावकयाऽ२३ । पारिप्रस्याऽ३१२३ । दताऽ५इसुताः ॥ आइन्दुरश्वा-
ऽ३१२३ः । नकोवा । त्वाऽ६योऽ६"हाइ ॥ श्रीः ॥ इन्दुः । अश्वोऽ३ ।
नकृत्वियाः ॥ तन्दुरोपमभीनराऽ२३ः । सोमंविश्वाऽ३१२३ । चिया-
ऽ५धिया ॥ याज्ञायसाऽ३१२३ ॥ तुवोवा । द्राऽ५योऽ६"हाइ ॥

दी. १५. उत्. न. मा. २०. चौ. ॥१३३॥

१४. कार्तयशम् । कृतयशाः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोहाहाउ ॥ जाऽ२३४इती । वोआऔऽ३होऽ३ । घासाः ।
सुताऔऽ३होऽ३ । यामाऽ६ । हाउवा । दयित्नवेऽ२ ॥ उपा ॥ अप-
श्वानश्नथाऽ१इष्टाऽ३ना ॥ सखाऔऽ३होऽ३ । योदाऽ६ । हाउवा ॥
घजिह्वियम् । उपाऽ२३४५ ॥ श्रीः ॥ सखाहाहाउ ॥ योऽ२३४दी ।

घजाऔऽ३होऽ३ । ह्वायाम् । योधाऔऽ३होऽ३ । रायाऽ६ । हाउवा । पावकयाऽ२ । उपा ॥ परिप्रस्यन्दताऽ१इसूऽ३ताः ॥ इन्दूरौऽ३होऽ३इ । आश्वाऽ६: । हाउवा ॥ नक्रत्विय: । उपाऽ२३४५ ॥श्रीः॥ इन्दुर्हाहाउ ॥ आऽ२३४श्वाः । नकाऔऽ३होऽ३ । त्वायाः । तन्दूऔऽ३होऽ३ । रोपाऽ६म् । हाउवा । अभीनराऽ२ः । उपा । सोमंविश्वाचियाऽ१धाऽ३या ॥ यज्ञाऔ-ऽ३होऽ३ । यासाऽ६ । हाउवा ॥ तुवद्रय: । उपाऽ२३४५ ॥

दी, १२. उत् . १५. मा. ३३. त्रि. ॥१३४॥

१५. सौहविषम् ॥ इन्द्रः । द्विपदा विराट् । पवमानस्सोमः ॥

प्रवाजियक्षाः ॥ सहस्रधारास्ताऽ१इराऽ२३४: । हाइ । पवित्राम् ॥ विवाराऽ२३४५हाइ ॥ आऽ२३४न्योऽ६"हाइ ॥ श्रीः ॥ सवाजियच्चाः ॥ सहस्रेताऽद्भाऽ२३४इः । हाइ । मृजानाः ॥ गोभाइरश्राऽ२३४इहाइ ॥ णाऽ२३४नोऽ६"हाइ ॥ श्रीः ॥ प्रसोमयाही ॥ इन्द्रस्यकुक्षानृभाऽ२३४इः । हाइ । येमानाः ॥ अद्रिभाऽ२३४इहाइ ॥ सुऽ२३४तोऽ६"हाइ ॥

दी. ११. उत् . ८. मा. २४. गी. ॥३५॥

१६. जराबोधीयम् । अग्निः । गायत्री । पवमानस्सोमः ॥

येसोमासोवा ॥ परावताइ । येआर्वाऽ२३वा । तिसुन्वाइराइ ॥ येवादाऽ१श्शाऽ२३"र्या । णा । वतोऽ३४५इ ॥ डा ॥ श्रीः ॥ यआर्जी-कोवा ॥ सुकृत्वसु । येमाध्याऽ२३इपा । स्तियानाम् ॥ येवाजाऽ१ना-ऽ२३इ"षू । प । चसोऽ३४५इ ॥डा॥ श्रीः ॥ तेनोवृष्टोवा ॥ दाइवस्पराइ ।

पवान्ताऽ२३मा । सुवीरायाम् ॥ स्वानादाऽ१इवाऽ२३"साः । इ । दवो-ऽ३४५इ ॥डा॥

दी· १५· उत्· ९· मा· १६· भू· ॥१३६॥

१७· वात्सम् । वत्सः काण्वः । गायत्री । अग्निः ॥

आतेवत्साः ॥ मनोयमत् । परमात् । चित्सधाऽ२३स्थात् ॥ अग्राइत्वाऽ३ङ्काऽ३ ॥ मयोवा ॥ गाऽ५इरोऽ६"हाइ ॥श्रीः॥ पुरुत्राही ॥ सदृङ्ङसि । दिशोविश्वाः । अनुप्राऽ२३भूः ॥ समात्सूऽ३त्वाऽ३ ॥ हवोवा । माऽ५होऽ६"हाइ ॥ श्रीः ॥ समत्सुवा ॥ ग्निमवसे । वाजयन्तः । हवामा-ऽ२३हाइ । वाजाइषूऽ३चाऽ३इ ॥ त्ररोवा । घाऽ५सोऽ६"हाइ ॥

दी· ११· उत्· ३· मा· १५· गु· ॥१३७॥

१८· सौश्रवसम् ॥ उपगुस्सौश्रवसः । ककुप् । इन्द्रः ॥

तुवन्नाऽ३इन्द्रआभरा ॥ ओजोनृम्णं२शतक्रतोविचर्षणाइ ॥ आवौऽ२ । हौऽ२ । हुवाऽ२३इ । राऽ३४म्पा ॥ तनासाहाम् ॥ श्रीः ॥ तुवं२हाऽ३इनऽपितावसाउ । त्वंमाताशतक्रतोबभूविथा ॥ अथौऽ२ । हौऽ२ । हुवाऽ२३इ । ताऽ३४इम्रु ॥ म्नमीमाहाइ ॥ श्रीः ॥ तुवां२शूऽ३-ष्मिन्पुरुहूता ॥ वाजयन्तमुपब्रुवेसहस्कृता ॥ सनौऽ२ । हौऽ२ । हुवा-ऽ२३इ । राऽ३४स्वा ॥ सुवीरायाम् । ऐं । हाऽ२एऽ२३ । ह्रियाऽ३४-औहोवा ॥ एऽ३ । उपाऽ३१२३४५ ॥

दी. २०. उत्· ४· मा· १४· भी· ॥१३८॥

१९. वीङ्कम् ॥ गृत्समदः। अनुष्टुप्। इन्द्रः॥

यदिन्द्रचित्रमइ। हनाऽ३। आस्ती॥ त्वादातमद्रिवः। राधस्ता-
ऽ२३न्नाः। वीवीऽ२। दद्वसाउ॥ उभयाऽ२३ह्ना। स्तायाऽ२३। भाऽ२३-
राऽ३४३॥श्रीः॥ यन्मन्यसेवरे। णियाऽ३म्। आइन्द्रा॥ द्युक्षंतदाभर।
विद्यामाऽ२३ता। स्यास्याऽ२। तेवयाम्॥ अकूपाऽ२३रा॥ स्यादाऽ२३।
वाऽ२३नाऽ३४३ः॥ श्रीः॥ यत्तेदिक्षुप्ररा। धियाऽ३म्। मानाः॥
अस्तिश्रुतंबृहत्। तेनदाऽ२३ढीं। चाइचाऽ२इत्। अद्रिवाः॥ आवाजा-
ऽ२३न्दा॥ षाइसाऽ२३। ताऽ२३याऽ३४३इ। ओऽ२३४५इ॥डा॥

दी. १४. उत्. न. मा. १८. लै. ॥१३९॥

२०. वैरूपम्॥ इन्द्रः। गायत्री। पवमानस्सोमः॥

अध्वर्योऽ२३४आ॥ द्रिभाइस्सुऽ३ताऽ३स्। सोमाऽ२म्पा-
ऽ२३४वी। त्राआऽ१नायाऽ२॥ पुनाऽ२३॥ हीन्द्राऽ३४औहोवा॥
यपातवेऽ२३४५॥ श्रीः॥ तवत्याऽ२३४ई॥ दोआन्धाऽ३साऽ३ः।
देवाऽ२माऽ२३४घोः। वायाऽ१शाताऽ२॥ पवाऽ२३॥ मानाऽ३४-
औहोवा॥ स्यमरुताऽ२३४५ः॥ श्रीः॥ दिवऽपीऽ२३४यू॥ षमूत्ताऽ३-
माऽ३म्। सोमाऽ२माऽ२३४इन्द्रा। यावआइणाऽ२इ॥ सुनोऽ२३॥
तामाऽ३४औहोवा॥ धुमत्तमाऽ२३४५म्॥

दी. १४. उत्. ६. मा. १७. बे. ॥१४०॥

चतुर्थस्यार्धःप्रपाठकः॥

१. आशुभार्गवम् ॥ भृगुः । गायत्री । पवमानस्सोमः ॥

अध्वर्योअद्रि । भिस्सूऽ३ताम् ॥ सोमम्पवाऽ३इ । त्राआऽ२ना-ऽ२३४या ॥ पुनाहाऽ१इन्द्राऽ२ ॥ यपाऽ३ । ताऽ२३४वोऽ६"हाइ ॥श्रीः॥ तवत्यइन्दो । अन्धाऽ३साः ॥ दाइवामघोऽ२ः । वायाऽ२शाऽ२३४ता-॥ पवामाऽ१नाऽ२ ॥ स्यमाऽ३ । रूऽ२३४तोऽ६"हाइ ॥श्रीः॥ दिवःपीयूषम् । उत्ताऽ३माम् ॥ सोममिन्द्राऽ३ । यात्राऽ२ज्राऽ२३४इणाइ ॥ सुनोता-ऽ१माऽ२ ॥ धुमाऽ३ । ताऽ२३४मोऽ६"हाइ ॥

दी. ५. उत्. १. मा. १६. पू. ॥१४१॥

२. मार्गीयवम् ॥ मृगयुः । गायत्री । पवमानस्सोमः ॥

अध्वौहोवा ॥ र्योआऽ२ । द्रिभाइस्सूऽ२३४ताम् । सोमम्पवि । त्रआनाऽ१याऽ२ ॥ पुना । हा । औऽ३होइ । हीऽ२३४न्द्रा ॥ याऽ२-पाऽ२३४औहोवा ॥ एऽ३ । तवेऽ२३४५ ॥श्रीः॥ तवौहोवा ॥ त्याआऽ२इ । दोअन्धाऽ२३४साः । देवामघोः । वियाशाऽ१ताऽ२ ॥ पवा । हा । औऽ३होइ । माऽ२३४ना ॥ स्याऽ२माऽ२३४औहोवा ॥ एऽ३ । रुता-ऽ२३४५ः ॥ श्रीः ॥ दिवौहोवा ॥ पीयूऽ२ । षमुत्ताऽ२३४माम् । सोम-मिन्द्रा । यवाज्राऽ१इणाऽ२इ ॥ सुनो । हा । औऽ३होइ । ताऽ२३४मा ॥ धूऽ२माऽ२३४औहोवा ॥ एऽ३ । तमाऽ२३४५म् ॥

दी. १९. उत्. ६. मा. २०. तौ. ॥१४२॥

३. सौमित्रम् । सुमित्रः । गायत्री । पवमानस्सोमः ॥

अध्वर्योअद्रिभिस्सुताऽ३मे ॥ सोमम्पवित्रे । आऽ२१२३ । नया-ऽ३४३ ॥ पूऽ२३ना ॥ हीन्द्राऽ२ओऽ२३ । यपोवा । ताऽ५वोऽ६"हाइ ॥

श्रीः ॥ तवत्यइन्दोअन्धसाऽ३ए ॥ देवामधोविं । आऽ२१२३ । शता-ऽ३४३ ॥ पाऽ२३वा ॥ मानाऽ२ओऽ२३ । स्यमोवा । रूऽ५तोऽ६"हाइ ॥

श्रीः ॥ दिवःपीयूषमुत्तमाऽ३मे ॥ सोममिन्द्राय । वाऽ२१२३ । त्रिणा-ऽ३४३इ ॥ सूऽ२३नो ॥ तामाऽ२ओऽ२३ । धुमोवा । ताऽ५मोऽ६"हाइ ॥

दी. १४. उत्. ३. मा. ११. द. ॥१४३॥

४. ऐटतम् ॥ इटन् काव्यः । गायत्री । पवमानस्सोमः ॥

अध्व । एआध्वा ॥ योअद्रि । भाऽ३इः । द्राऽ२इभाऽ२३४-औहोवा । सूऽ२३४ताम् ॥ सोमाम्पाऽ२३४वी ॥ त्रआऽ३ । त्राऽ२आ-ऽ२३४औहोवा । नाऽ२३४या ॥ पुनाहाऽ२३४इन्द्रो ॥ यपाऽ३ । याऽ२पाऽ२३४औहोवा ॥ ताऽ२३४वे ॥श्रीः॥ तव । एतावा ॥ त्यइन्दो । आऽ३ । दोऽ२आऽ२३४औहोवा । धाऽ२३४साः ॥ देवामाऽ२३४धोः ॥ वियाऽ३ । वाऽ२याऽ२३४औहोवा ॥ शाऽ२३४ता ॥ पवामाऽ२३४ना ॥ स्यमाऽ३ । स्याऽ२माऽ२३४औहोवा ॥ रूऽ२३४ताः ॥ श्रीः ॥ दिवः । एदाइवाः ॥ पीयूषम् । ऊऽ३ । षाऽ२मूऽ२३४औहोवा । ताऽ२३४माम् ॥ सोमामाऽ२३४इन्द्रा ॥ यवाऽ३ । याऽ२वाऽ२३४औहोवा । त्रीऽ२३४णे ॥ सुनोताऽ२३४मा ॥ धुमाऽ३ । धूऽ२माऽ२३४औहोवा ॥ ताऽ२३४माम् ॥

दी. २५. उत्. न. मा. ३०. वौ. ॥१४४॥

५. धुरासाकमश्वम् ॥ साकमश्वः । गायत्री । पवमानस्सोमः ॥

अध्वर्योआऽ३ । हौऽ३होऽ३१ ॥ द्रिभिस्सुताऽ३म् । हौऽ३-
होऽ३१इ ॥ सोमम्पवाऽ३इ । हौऽ३होऽ३१ ॥ त्रआनयाऽ३ । हौऽ३होऽ३१इ ॥
पुनाहीन्द्राऽ३ । हौऽ३होऽ३१ ॥ यपातवाऽ३इ । हौऽ३होऽ३१२३४५इ ॥
डा ॥श्रीः॥ तवत्यआऽ३ । हौऽ३होऽ३१ ॥ दोअन्धसाऽ३ः । हौऽ३हो-
ऽ३१इ ॥ देवामधोऽ३ः । हौऽ३होऽ३१इ ॥ वियाशताऽ३ । हौऽ३हो-
ऽ३१इ ॥ पवमानाऽ३ । हौऽ३होऽ३१ ॥ स्यमरुताऽ३ः । हौऽ३होऽ३१-
२३४५इ ॥ डा ॥श्रीः॥ दिव५पीयूऽ३ । हौऽ३होऽ३१ ॥ षमुत्तमाऽ३म् ।
हौऽ३होऽ३१इ ॥ सोममिन्द्राऽ३ । हौऽ३होऽ३१ ॥ यवज्रिणाऽ३इ ।
हौऽ३होऽ३१इ ॥ सुनोतामाऽ३ । हौऽ३होऽ३१ ॥ धुमत्तमाऽ३म् ।
हौऽ३होऽ३१२३४५इ ॥डा॥ दी १५. उत्. ना. मा. २३. वि. ॥१४५॥

६. विलम्बसौपर्णम् ॥ सुपर्णः । गायत्री । पवमानस्सोमः ॥

अध्वर्योअद्रिभिस्सुतम् । ईयइयाहाइ ॥ सोमम्पवित्रआ । हाऽ३-
हाऽ३इ । नाऽ२३४या ॥ पूनाऽ३उवाऽ३ ॥ हाऽ२इन्द्राऽ२३४औहोवा ॥
यपातवेऽ२३४५ ॥श्रीः॥ तवत्यइन्दोअन्धसः । ईयइयाहाइ ॥ देवामधोर्विया ।
हाऽ३हाऽ३इ । शाऽ२३४ता ॥ पावाऽ३उवाऽ३ ॥ माऽ२नाऽ२३४औहोवा ॥
स्यमरुताऽ२३४५ः ॥ श्रीः ॥ दिव५पीयूषमुत्तमम् । ईयइयाहाइ ॥ सोम-
मिन्द्रायवा । हाऽ३हाऽ३ । ज्राऽ२३४इणाइ ॥ सूनाऽ३उवाऽ३ ॥ ताऽ२मा-
ऽ२३४औहोवा ॥ धुमत्तमाऽ२३४५म् ॥ दी. २०. उत्. १. मा. २६. पू. ॥१४६॥

७. द्विहिङ्कारवामदेव्यम् ॥ वामदेवः । बृहती । पवमानस्सोमः ॥

अभिसोऽ२३मासआयवाः ॥ पावन्तेमद्यंमदः समुद्रस्याधिविष्टपा-
इमनौहोऽ३ । हुम्माऽ२ । पाऽ२३इणाः ॥ मत्सरासोमदौहोऽ३ ।
हुम्माऽ२ ॥ च्युता । औऽ३होवा ॥ श्रीः ॥ मत्सराऽ२३सोमदच्युताः ॥
मात्सरासोमदच्युतस्तरत्समुद्रम्पवमानऔहोऽ३ । हुम्माऽ२ । माऽ२३इणा ॥
राजादेवाऋतौहोऽ३ । हुम्माऽ२ ॥ बृहात् । औऽ२३होवा ॥ श्रीः ॥
राजादाऽ२३इवऋतम्बृहात् ॥ राजादेवऋतम्बृहदर्षामित्रस्यवरुणास्यधौहोऽ३ ।
हुम्माऽ२ । माऽ२३णा ॥ प्रहिन्वानाऋतौहोऽ३ । हुम्माऽ२ ॥ बृहात् ।
औऽ२३होवा । होऽ५इ ॥ डा ॥ दी. २३. उत्. ६. मा. १७. टे. ॥१४७॥

८. गायत्रपार्श्वम् ॥ देवाः । बृहती । पवमानस्सोमः ॥

आभी ॥ सोमासआऽ३१उवाऽ२३ । याऽ२३४वाः । पवन्ते-
मदियंमदः समुद्रस्याधिविष्टपेमनीषिणाऽ२३४५ः ॥ मत्साराऽ१साऽ२ः ॥
मदाऽ३ । हुम्स्थिऽ२३बाऽ३ ॥ च्यूताऽ२३४५ः ॥ श्रीः ॥ मात्सा ॥
रासोमदाऽ३१उवाऽ२३ । च्यूऽ२३४ताः । मत्सरासोमदच्युतस्तरत्समुद्र-
म्पवमानऊर्मिणाऽ२३४५ ॥ राजादाऽ१इवाऽ२ः ॥ ऋताऽ३म् । हुम्स्थि-
ऽ२३बाऽ३ । बृहाऽ२३४५त् ॥ श्रीः ॥ राजा ॥ दाइवऋताऽ३१उवाऽ२३ ।
बृऽ२३४हात् । राजादेवऋतम्बृहदर्षामित्रस्यवरुणस्यधर्मणाऽ२३४५ ॥ प्रहा-
इन्वाऽ१नाऽ२ः ॥ ऋताऽ३म् । हुम्स्थिऽ२३बाऽ३ ॥ बृहाऽ२३४५त् ॥
दी. १५. उत्. ४. मा. २५. मु. ॥१४८॥

९. पौरुहन्मनम् ॥ पुरुहन्मा वैखानसः । बृहती । पवमानस्सोमः ॥

अभिसोऽ३मासआयवाः ॥ पावन्तेम । दियाम्माऽ१दाऽ२म् । मादाऽ२म् । सामुद्रस्या । धाइ । विष्टपाऽ३इ (द्विः) । मानीषाऽ२३४इणाः ॥ मात्सरासो । मादच्यूऽ२३४ताः ॥ मदाऽ५च्युताः ॥ श्रीः॥ मत्सराऽ३सोमदच्युताः ॥ मात्सरासः । मदाच्यूऽ१ताऽ२ः । च्यूताऽ२ः । तारत्समुद्राम् । पवमाऽ३ ( द्विः ) । नाऊर्माऽ२३४इणा ॥ राजादेवाः । आर्तम्बृऽ२३४हात् ॥ ऋताऽ५म्बृहात् ॥ श्रीः ॥ राजादाऽ३इवऋतम्बृहात् ॥ राजादेवः । ऋताम्बृऽ१हाऽ२त् । बृहाऽ२त् । आर्पामित्र । स्या । वरुणाऽ३(द्विः) । स्याधर्माऽ२३४णा ॥ प्राहिन्वानाः । आर्तम्बृऽ२३४हात् ॥ ऋताऽ५म्बृहात् । होऽ५इ ॥डा॥ दी. १५. उत्. ३. मा. ३१. ब. ॥१४९॥

१०. द्वैगतम् । द्विगद्भार्गवः । बृहती । पवमानस्सोमः ॥

अभिसोऽ३मासआयवाः ॥ पावन्तेम । दियाम्माऽ१दाऽ२म् । समूऽ३ । हौऽ३होऽ३वा । द्रस्याधिविष्टपेमानीऽ१षिणाऽ२ः ॥ मत्साऽ२३ ॥ राऽ२साऽ२३४औहोवा ॥ एऽ३ । मदाऽ२च्युताऽ२३४५ः ॥श्रीः॥ मत्सराऽ३सोमदच्युताः ॥ मात्सरासः । मदाच्यूऽ१ताऽ२ः । तराऽ३त् । हौऽ३होऽ३वा । समुद्रम्पवमानाऊऽ१र्मिणाऽ२ ॥ राजाऽ२३ ॥ दाऽ२इवाऽ२३४औहोवा ॥ एऽ३ । ऋताऽ२म्बृहाऽ२३४५त् ॥ श्रीः ॥ राजादाऽ३इवऋतम्बृहात् ॥ राजादेवः । ऋताम्बृऽ१हाऽ२त् । अर्षाऽ३ । हौऽ३होऽ३वा । मित्रस्यवरुणस्याधर्मणाऽ२ ॥ प्रहाऽ२३इ ॥ न्वाऽ२नाऽ२३४औहोवा ॥ एऽ३ । ऋताऽ२म्बृहाऽ२३४५त् ॥ दी. १९. उत्. ३. मा. २२. दा. ॥१५०॥

११. हारायणम् ॥ इन्द्रः । बृहती । पवमानस्सोमः ॥

अभिसोमौहोऽ२इसआयवाः ॥ पावन्तेमद्यंमदम् । समूद्राऽ३स्या । धिविष्टपाइ । मनाऽ३हाइ । षाइणाऽ२ः । मत्सरासोमदोवाऽ३ओऽ२३४वा । च्यूऽ५तोऽ६"हाइ ॥श्रीः॥ मत्सरासोहोऽ२इमदच्युताः ॥ मात्सरासोमदच्युतः । तरात्साऽ३मू ॥ द्रम्पवमा । नऊऽ३हा ॥ माइणाऽ२ ॥ राजादेवऋतोवा-ऽ३ओऽ२३४वा । बृऽ५होऽ६"हाइ ॥ श्रीः ॥ राजादेवौहोऽ२ऋतम्बृहात् ॥ राजादेवऋतम्बृहत् । अर्षामाऽ३इत्रा । स्यवरुणा । स्यधाऽ३हा ॥ माणाऽ२ ॥ प्रहिन्वानऋतोवाऽ३ओऽ२३४वा । बृऽ५होऽ६"हाइ ॥

दी. २०. उत्. ना. मा. २६. बृ. ॥१५१॥

१२. अच्छिद्रम् ॥ विश्वामित्रः । बृहती । पवमानस्सोमः ॥

अभिसोमा ॥ सआऽ३१उवाऽ२३ । याऽ२३४वाः । पवन्तेमदियं-मदाऽ२३४५म् ॥ पवन्तेमा ॥ दियाऽ३१उवाऽ२३ । माऽ२३४दाम् । समुद्रस्याधिविष्टपेमनीषिणाऽ२३४५ः ॥ समुद्रस्या ॥ धिवि । ष्टा । पेमना-ऽ३१उवाऽ२३इ । षीऽ२३४णाः । मत्सरासोमदच्युताऽ२३४५ः ॥ मत्स-रासाः ॥ मदाऽ३१उवाऽ२३ । च्यूऽ२३४ताः ॥ श्रीः ॥ मत्सरासाः । मदाऽ३१उवाऽ२३ । च्यूऽ२३४ताः । मत्सरासोमदच्युताऽ२३४५ः ॥ मत्सरासाः ॥ मदाऽ३१उवाऽ२३ । च्यूऽ२३४ताः । तरत्समुद्रम्पवमान-ऊर्मिणाऽ२३४५ ॥ तरत्समू ॥ द्रम्पव । मा । नऊऽ३आउवाऽ२३ । मीऽ२३४णा । राजादेवऋतम्बृहाऽ१त् ॥ राजादेवाः ॥ ऋताऽ३१उवाऽ२३ ॥

बृऽ२३४हात् । श्रीः ॥ राजादेवाः ॥ ऋताऽ३१उवाऽ२३ । बृऽ२३४हात् ।
राजादेवऋतम्बृहाऽ१त् ॥ राजादेवाः ॥ ऋताऽ३१उवाऽ२३ । बृऽ२३४-
हात् । अर्षामित्रस्यवरुणस्यधर्मणाऽ२३४५ ॥ अर्षामित्रा ॥ स्यवरु ।
णा । स्यधाऽ३१उवाऽ२३ । माऽ२३४णा । प्रहिन्वानऋतम्बृहाऽ१त् ॥
प्रहिन्वानाः ॥ ऋताऽ३१उवार२३ ॥ बृऽ२३४हात् ॥

दी. ३५. उत्. ४. मा. ४४. भी. ॥१५२॥

१३. बार्हदुक्थम् । बृहदुक्थो वाम्नेयः । बृहती । पवमानस्सोमः ॥

प्रहिन्वानऋ । ताऽ२म्बृहात् ॥ प्रहिन्वानऋतम्बृऽ२३हात् । नृभि-
र्येमाऽ२ । णोहर्यतोऽ२ । विचक्षणाः ॥ राजादाऽ२३इवाः ॥ समुद्राऽ२३-
याऽ३४३ः । ओऽ२३४५इ ॥ डा ॥ दी. ४. उत्. २. मा. ६. थो. ॥१५३॥

१४. उद्वद्भार्गवम् ॥ भृगुः । जगती । पवमानस्सोमः ॥

घर्तादाइवाऽ२३ः । पवताइक्राऽ२३ । त्वीयोरसाः ॥ दक्षो-
दाइवाऽ२३ । नामनूमाऽ२३ । दीयोनृभाइः ॥ हरिस्साजोऽ२३ ।
नोअताइयोऽ२३ । नासत्वभाइः ॥ वृथापाजाऽ२३ । सिक्रणूषाऽ२३इ ।
नादीषुवाऽ३१उ ॥श्रीः॥ शूरोनाधाऽ२३ । तआयूधाऽ२३ । गाभस्तियोः ॥
सुवस्साइषाऽ२३ । सन्रथाइरोऽ२३ । गाविष्टिषू ॥ इन्द्रस्याशूऽ२३ ।
ष्ममीरायाऽ२३न् । आपस्युभाइः ॥ इन्दुर्हाइन्वाऽ२३ । नोअज्याताऽ२३इ ।
मानीषिभाऽ३१उ ॥श्रीः॥ इन्द्रस्यासोऽ२३ । मघवामाऽ२३ । नाऊर्मिणा ॥
तविष्यामाऽ२३ । णोजठाराऽ२३इ । षूआविशा ॥ प्रन ४पाइन्वाऽ२३ ।

विद्युदाभ्रेऽ२३ । वारोदसाइ ॥ धियानोवाऽ२३ । जा१उपामाऽ२३ । हीशश्वताऽ३१उ"वाऽ२३४५ ॥ दी. ३२. उत्. ३६. मा. ३१. च. ॥१५४॥

१५. नैपातिथम् । निपातिथिः । बृहती । इन्द्रः ॥

यदिन्द्रप्रागपागुदाऽ३गे ॥ नायग्वाहू । यसाइनृभीऽ३ः । हा । औहोऽ२३४हा । सिमाऽ२पुरूनृषूतोअ । सियानवेऽ२३ । हा । औहोऽ२३४हा ॥ असाइप्राशाऽ३ । हा । औहोऽ२३४हा ॥ घाऽ२तूऽ२३४औहोवा ॥ वोऽ२३४शे ॥ श्रीः ॥ असिप्रशर्द्धतुर्वशाऽ३ए ॥ आसिप्रश । घतूर्वशेऽ३ । हा । औहोऽ२३४हा । यद्वाऽ२रुमेरुशमेश्या । वकाइकृपाऽ२३ । हा । औहोऽ२३४हा ॥ इन्द्रामादाऽ३ । हा । औहोऽ२३४हा ॥ याऽ२साऽ२३४औहोवा ॥ साऽ२३४चा ॥ श्रीः ॥ इन्द्रमादयसेसचाऽ३ए ॥ आइन्द्रमाद । यसाइसचाऽ३ । हा । औहोऽ२३४हा । कण्वाऽ२सस्त्वास्तोमेभिर्त्र । ह्मवाहसाऽ२३ः । हा । औहोऽ२३४हा ॥ इन्द्रायाच्छाऽ३ । हा । औहोऽ२३४हा ॥ ताऽ२आऽ२३४औहोवा ॥ गाऽ२३४ही ॥

दी. ३१. उत्. ६. मा. १४. की. ॥१५५॥

१६. वैयश्वम् ॥ व्यश्वो आङ्गिरसः । बृहती । इन्द्रः ॥

उभय१शृणवच्चनाऽ३ए ॥ आइन्द्रोऽ२अर्वागिदंवचाऽ२३ः । होवाऽ३हाइ । सत्राचियामघवाऽ२न् । सो । मापाऽ३हाइ । ताऽ२३४याइ ॥ धियाशविष्ठआऽ२३होइ ॥ गमात् । औऽ२३होवा ॥ श्रीः ॥ धियाशविष्ठआगमाऽ३दे ॥ धायाऽ२शविष्ठआगमाऽ२३त् । होवाऽ३हाइ । त१हिस्वराजाऽ२म्वृषभाम् । तामोऽ३हाइ । जाऽ२३४सा ॥ धिषणेनिष्टताऽ२३होइ ॥

क्षतूः । औऽ२३होवा ॥ श्रीः ॥ धिषणेनिष्टतत्क्षतूऽ३रे ॥ धाइषाऽ२णेनिष्टत-क्षतूऽ२३ः । होवाऽ३हाइ । उतोपमानाऽ२म्प्रथमो । नाइषाऽ३हाइ । दाऽ२३४साइ ॥ सोमकामꣳहिताऽ२३इहोइ ॥ मना । औऽ३होवा । होऽ५इ ॥डा॥ दी. १५. उत्. ६. मा. २८. पै. ॥१५६॥

१७. सुरूपाद्यम् ॥ सुरूपः । गायत्री । पवमानस्सोमः ॥

पवस्वदाऽ२इ । इयाऽ२इया ॥ वज्र्यायूषाऽ२क् । इन्द्रङ्गच्छाऽ२ । इयाऽ२इया । तुतेमादाऽ२ः ॥ वायुमारोऽ२ । इयाऽ२इया ॥ हृधर्माऽ२३-णाऽ३४३ ॥ श्रीः ॥ पवमानाऽ२ । इयाऽ२इया ॥ नितोशासाऽ२इ । रयिꣳसोमाऽ२ । इयाऽ२इया । श्रवाय्यायाऽ२म् ॥ इन्दोसमूऽ२ । इयाऽ२-इया ॥ द्रमावाऽ२३इशाऽ३४३ ॥ श्रीः ॥ अपघ्नन्पाऽ२ । इयाऽ२इया ॥ वसेमार्घाऽ२ः । क्रतुवित्सोऽ२ । इयाऽ२इया । ममत्साराऽ२ः ॥ नुदस्वा-दाऽ२इ । इयाऽ२इया ॥ वयुञ्जाऽ२३नाऽ३४३म् । ओऽ२३४५इ ॥डा॥

दी. १२. उत्. १८. मा. २२. जा. ॥१५७॥

१८. भासम् ॥ अत्रिः । गायत्री । पवमानस्सोमः ॥

पव । स्वाऽ३दाइ । वाः । ईया ॥ आयूऽ१षाऽ२क् । आइन्द्र-ङ्गच्छ । तु । तौऽ३हो । वाहाइ । मदाऽ२ः ॥ वायूऽ२३म् ॥ आऽ२रो-२३४औहोवा ॥ हृधर्मणाऽ१ ॥ श्रीः ॥ पव । माऽ३ना । नाइ । ईया ॥ तोशाऽ१साऽ२इ । रायिꣳसोम । श्र । वौऽ३हो । वाहाइ । इयाऽ२म् ॥ इन्दोऽ२३ ॥ साऽ२मूऽ२३४औहोवा ॥ द्रमाविशाऽ१ ॥ श्रीः ॥ अप । घ्नाऽ३न्पा । वा । ईया ॥ साइमाऽ१र्घाऽ२ः । क्रातुवित्सो । म ।

न २र ३र २ १ — १ १ ^३ ५र र
मौऽ२हो । वाहा । त्सराऽ२ः ॥ नुदाऽ२३ । स्वाऽ२दाऽ२३४औहोवा ॥
२ ३ २
वयुञ्जनाऽ१म् ॥ दी. १६. उत्. ना. मा. १८. है. ॥१५८॥

१९. काक्षीवतम् ॥ कक्षीवानौशिजः । गायत्री । पवमानस्सोमः ॥

५ २ ४र ५र २ १ २ १ २र १ न २
पवस्वाऽ३देवआयुषक् ॥ इन्द्राङ्गच्छ । तुतेमदाऽ३ः । ओऽ३४ ।
३र २ १र २ ३र २ ^ ३र १ ५ ४
हाहोइ ॥ वायूमाऽ२३रो ॥ इधौहोइ । औहोऽ२३४वा । माऽ५शोऽ६-"
५ ५ २ ४ ५र २ १ २र १ २ र १ न
हाइ ॥ श्रीः ॥ पवमाऽ३ननितोशसाइ ॥ रयाइश्सोम । श्रवायियाऽ३म् ।
२ ३र २ १ २ ३र २ ^ ३र १ ५
ओऽ३४ । हाहोइ ॥ इन्दोसाऽ२३मू ॥ द्रमौहोइ । औहोऽ२३४वा ।
४ ५ ५ २ ४ ५र २ १ २ १र
वाऽ५इशोऽ६"हाइ ॥ श्रीः ॥ अपघ्नाऽ३न्पवसेमृधाः ॥ क्रतूवित्सो ।
२ १ न २ ३र २ १ २ ३र २ ^
ममत्सराऽ३ः । ओऽ३४ । हाहोइ ॥ नुदास्वाऽ२३दाइ ॥ वयौहोइ ।
३र १ ५ ४ ५
औहोऽ२३४वा । जाऽ५नोऽ६"हाइ ॥ दी. १८. उत्. ६. मा. १९. टो. ॥१५९॥

२०. वासिष्ठमासितम् ॥ असितो देवलः । गायत्री । पवमानस्सोमः ॥

३ ४ ५ र ४ ५र २ २ ५ १ २ —
पवस्वदेवआ । इयाऽ३४३ईऽ३४या ॥ युषागिन्द्रङ्गच्छतुतौऽ२ ।
— १ — १ — १र २ १ र २ १ २ १
हौऽ२ । हुवाऽ२इ । मादाऽ२ः ॥ वायूऽ३१होइ । आरोऽ३हो ॥ इधर्मा-
२ ३ ४ ५र ४ ५र २ २ ५ १
ऽ२३णाऽ३४३ ॥श्रीः॥ पवमाननितो । इयाऽ३४३ईऽ३४या ॥ शसाइरयि-
२ — — १ — १ २ १
श्सोमश्रवौऽ२ । हौऽ२ । हुवाऽ२इ । आयाऽ२म् ॥ इन्दोऽ३होइ ।
२ १ २ १र २ ४ ३ ४ ५ र २
समूऽ३हो ॥ द्रमावाऽ२३इशाऽ३४३ ॥ श्रीः ॥ अपघ्नन्पवसे । इयाऽ३४३-
२ ५ १ र २ — — १ — १ —
ईऽ३४या ॥ मृधाः क्रतुवित्सोममौऽ२ । हौऽ२ । हुवाऽ२इ । त्साराऽ२ः ॥
१ २ १ र २ १ २ १ २ १
नुदाऽ३होइ । स्वादाऽ३हो ॥ वयुञ्जाऽ२३नाऽ३४३म् । ओऽ२३४५इ ॥डा॥
दी. ११. उत्. ३. मा. १७. गे. १६०

इति चतुर्थः प्रपाठकः ॥

अष्टमो विंशः ॥

१. ऐषिरम् ॥ वायुः । ककुप् । पवमानस्सोमः ॥

अभिद्युम्नम्बृहद्याऽ३शाः ॥ आइषस्पते । दाइदीऽ१हाइदेऽ२ । वादाऽ१इवायूऽ२म् ॥ वाइकोऽ१शाम्माऽ२३ ॥ ध्यमोवा । यूऽ५वोऽ६"हाइ ॥ श्रीः ॥ विकोशम्मध्यमंयूऽ३वा ॥ आवच्यस्व । सूदक्षाचाऽ२ । मूवोऽ१स्सूताऽ२ः ॥ वाइशाऽ१म्वाह्वाऽ२३इः ॥ नवोवा । श्पाऽ५तो-ऽ६''हाइ ॥ श्रीः ॥ विशाम्वह्निर्नविश्पाऽ३तीः ॥ वार्ष्टिन्दिवः । पावस्वारीऽ२ । ताइमाऽ१पाऽ२ः ॥ जाइन्वाऽ१न्गावाऽ२३इ ॥ ष्टयोवा । घाऽ५योऽ६''हाइ । दी. ३. उत्. ना. मा. २०. रौ. ॥१६१॥

२. त्रैतम् ॥ त्रितः । उष्णिक् । पवमानस्सोमः ॥

प्राणाशिशुर्महाइनाम् ॥ हिन्वन्नृतस्यदीधिताइम् ॥ विश्वापरिप्रिया-ऽ३भूवोऽ२३४हाइ ॥ आऽ२घाऽ२३४औहोवा ॥ एऽ३ । द्विताऽ२३४५ ॥ श्रीः ॥ उपत्रितस्यपाषायोः ॥ अभक्तयद्गुहापदाम् ॥ यज्ञस्यसप्तधाऽ३माभो-ऽ२३४हाइ ॥ आऽ२घाऽ२३४औहोवा ॥ एऽ३ । प्रियाऽ२३४५म् ॥ श्रीः ॥ त्रीणित्रितस्यधाराया ॥ पृष्ठेष्वैरयद्रयाइम् ॥ मिमीतेअस्ययोऽ३-जानोऽ२३४हाइ ॥ वाऽ२इष्ठूऽ२३४औहोवा ॥ एऽ३ । क्रतूऽ२३४५ः ॥ दी. २१. उत्. ३. मा. १८. गौ. ॥१६२॥

३. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

अभी । नोवाऽ३ । जसातमाम् ॥ रयिमर्षशतस्पृहाऽ२३म् । आइन्दोसहाऽ३१२३ । स्रभाऽ५र्णसाम् ॥ तूविद्युम्नाऽ३१२३म् ॥ विभोवा ।

साऽ५ह्रोऽ''६हाइ ॥ श्रीः ॥ वयम् । तेश्राऽ३ । स्यराधसाः ॥ वसोर्वसो-
पुरुस्पृहाऽ२३ः । नाइनेदिष्ठाऽ३१२३ । तमाऽ५इषाः ॥ स्यामसुम्ना-
ऽ३१२३इ ॥ तस्रोवा । धाऽ५इगोऽ६"हाइ ॥ श्रीः ॥ परि । स्यस्वाऽ३ ।
नोश्रक्षरात् ॥ इन्दुरव्येमदच्युताऽ२३ः । धारायऊऽ३१२३ । ध्वोआऽ५-
ध्वराइ ॥ श्राजानयाऽ३१२३ ॥ तिगोवा । व्याऽ५योऽ६"हाइ ॥

दी. १४. उत्. न. मा. २४. ली. ॥१६३॥

४. ऐडं कौत्सम् ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

अभीहीनोऽ२३ । वाजसातमीया ॥ रयिमर्षशतस्पृहम् । आइन्दो-
सह । स्रभर्णाऽ२३साम् ॥ तूवाऽ३हाइ । धूम्नाऽ३१हाइ ॥ विभासा-
ऽ२३हाऽ३४३म् ॥ श्रीः ॥ वयश्हीतेऽ२३ । अस्यराधसईया ॥ वसोर्वसो-
पुरुस्पृहः । नाइनेदिष्ठ । तमाआऽ२३इषाः ॥ स्यामाऽ३हाइ । सुम्नाऽ३-
इहाइ ॥ तेअध्राऽ२३इगाऽ३४३उ ॥ श्रीः ॥ परीहिस्याऽ२३ः । स्वानो-
अक्षरदीया ॥ इन्दुरव्येमदच्युतः । धारायऊ । ध्वोअध्वाऽ२३राइ ॥ आजा-
ऽ३हा । नायाऽ३हा ॥ तिगव्याऽ२३यूऽ३४३ः । ओऽ२३४५इ ॥डा॥

दी. २०. उत्. ७. मा. २६. फू. ॥१६४॥

५. पदनिधनशुद्धाशुद्धीयम् ॥ इन्द्रः । अनुष्टुप् । पवमानस्सोमः ।

अभीनोवाजसातमाम् ॥ रयिमर्षशतस्पृऽ२३हाम् । इन्दोसहस्र-
भर्णाऽ२३साम् ॥ तुवाइद्यूऽ२३म्नाऽ३म् ॥ वाऽ२इ । भासाऽ३४औहोवा ॥
हाऽ२३४५म् ॥ श्रीः ॥ वयन्तेअस्यराधसाः ॥ वसोर्वसोपुरुस्पृऽ२३हाः ।
निनेदिष्ठतमाआऽ२३इषाः ॥ स्यामसुऽ२३म्नाऽ३इ ॥ तेऽ२ । अध्राऽ३४-

औहोवा ॥ गाऽ२३४५उ ॥ श्रीः ॥ परिस्यस्वानोअक्षरात् ॥ इन्दुरव्ये-
मदच्यूऽ२३ताः । धारायऊर्ध्वोअध्वाऽ२३राइ ॥ आजानाऽ२३याऽ३ ॥
ताऽ२इ । गव्याऽ३४औहोवा ॥ यूऽ२३४५ः ॥

दी. २८. उत्. ५. मा. २६. गु. ॥१६५॥

६. क्रौञ्चायम् ॥ क्रुङ् । अनुष्टुप् । पवमानस्सोमः ॥

अभीनोवौहो । जासातमाम् ॥ रयिमर्षाऽ३ । शाताऽ३स्पृऽ५हा-
ऽ६५६म् ॥ इन्दोसहौहो । स्राभर्णसाम् ॥ तुविद्युम्नाऽ३म् । वाइभाऽ३सा-
ऽ५"हाऽ६५६म् ॥ श्रीः ॥ वयन्तऔहो । स्याराधसाः ॥ वसोवसाऽ३उ ।
पूरूऽ३स्पृऽ५हाऽ६५६ः ॥ निनेदिष्ठौहो । तामाइषाः ॥ स्यामसुम्नाऽ३इ ।
तेआऽ३ग्राऽ५इ"गाऽ६५६उ ॥ श्रीः ॥ परिस्यस्वौहो । नोअक्षरात् ॥ इन्दु-
रव्याऽ३इ । मादाऽ३च्यूऽ५ताऽ६५६ः ॥ धारायऔहो । र्ध्वोअध्वराइ ॥
आजानयाऽ३ । ताइगाऽ३व्याऽ५"यूऽ६५६ः ॥

दी. २५. उत्. १२. मा. २५. फु. ॥१६६॥

७. रयिष्ठम् ॥ इन्द्रः । अनुष्टुप् । पवमानस्सोमः ॥

अभीनोवा ॥ जसाताऽ३माम् । औऽ३होऽ३वा । रयिमर्षशत-
स्पृहाऽ२३४५म् ॥ रयिमर्षा ॥ शतास्पृऽ३हाम् । औऽ३होऽ३वा । इन्दो-
सहस्रभर्णसाऽ२३४५म् । इन्दोसहा ॥ स्रभार्णाऽ३साम् । औऽ३होऽ३वा ।
तुविद्युम्नंविभासहाऽ२३४५म् ॥ तुविद्युम्नाम् ॥ विभासाऽ३हाम् । औऽ३-
होऽ३वा ॥ श्रीः ॥ वयन्तेआ ॥ स्यराधाऽ३साः । औऽ३होऽ३वा ।

वसोर्वसोपुरुस्पृहाऽ२३४५ः । वसोर्वसाउ ।। पुरूस्पृऽ३हाः । औऽ३होऽ३वा ।
निनेदिष्ठतमाइषाऽ१ः ।। निनेदिष्ठा ।। तमाआऽ३इषाः । औऽ३होऽ३वा ।
स्यामसुम्नंतेअध्रिगाऽ२३४५उ ।। स्यामसुम्नाइ । तेआध्राऽ३इगा ।। औऽ३-
होऽ३वा ।। श्रीः ।। परिस्यस्वा ।। नोआक्षाऽ३रात् । औऽ३होऽ३वा ।
इन्दुरख्येमदच्युताऽ२३४५ः ।। इन्दुरख्याइ ।। मदाच्यूऽ३ताः । औऽ३होऽ३वा ।
धारायऊर्ध्वोअध्वराऽ१इ ।। धारायऊ ।। ध्वोआध्वाऽ३राइ । औऽ३होऽ३वा ।
आजानयातिगव्ययूऽ१ः ।। आजानया ।। तिगाव्याऽ३यूः । औऽ३होऽ३वा ।
(द्विः) ईऽ३या । ईऽ३याऽ३४ । हा । हाउवाऽ३ ।। ऊऽ३२३४पा ।।

दी. ३१. उत्. १५. मा. ३७. डे. ।।१६७।।

८. औदलम् ।। उदलो वैश्वामित्रः । अनुष्टुप् । पवमानस्सोमः ।।

अभीनोवा ।। जासाऽ२तमाम् । रयिमर्षाऽ३ । शातस्पृऽ२३४हाम् ।।
इन्दोसहा । स्राभाऽ२र्णसाम् । तुवाइद्यूऽ२३म्नाऽ३म् । वाऽ२३इभाऽ३ ।
साऽ३४५होऽ६"हाइ ।।श्रीः।। वयन्तेआ ।। स्याराऽ२धसाः । वसोर्वसाऽ३उ ।
पूरुस्पृऽ२३४हाः । निनेदिष्ठा ।। तामाऽ२इषाः । स्यामसुऽ२३म्नाऽ३इ ।
तेऽ२३आऽ३ । ध्राऽ३४५इगोऽ६"हाइ ।। श्रीः ।। परिस्यस्वा ।। नोआऽ२-
क्षरात् । इन्दुरख्याऽ३इ । मादच्यूऽ२३४ताः ।। धारायऊ ।। ध्वोआऽ२-
ध्वराइ । आजानाऽ२३याऽ३ । ताऽ२३इगाऽ३ । व्याऽ३४५योऽ६"हाइ ।।

दी. ११. उत्. ६. मा. २६. कू. ।।१६८।।

९. धर्म ।। प्रजापतिः । अक्षरपङ्क्तिः । पवमानस्सोमः ।।

औहोऽ३वा ( द्विः ) । औहोऽ२वाऽ२३४औहोऽ६वा । पवस्वसोम-
महान्त्समुद्राऽ१ः ।। पितादेऽ२वानाऽ२म्विश्वाभिधामाऽ२३४५ ।। श्रीः ।।

२ १ २ २ १२ २२ ३ १ १ १ २ १२ २ १२ २ १२ १ १ १
शुक्र ँपवस्वदेवेभ्यस्सोमाऽ२३४५ ॥ दिवेपृथिव्यैशश्चप्रजाभ्याऽ२३४५ः ॥
श्रीः ॥ दिवोधर्तासिशुक्र ँपीयूषाऽ२३४५ः ॥ सत्येविधर्मन्वाजीपवस्वा-
ऽ२३४५ ॥ श्रीः ॥ पवस्वसोमाऽ२३४५ ॥ महान्त्समुद्राऽ१ः ॥ पितादेऽ२-
वानाऽ२३४५म् ॥ विश्वाभिधामाऽ२३४५ ॥श्रीः॥ शुक्र ँपवस्वाऽ२३४५ ॥
देवेभ्यस्सोमाऽ२३४५ ॥ दिवेपृथिव्याऽ१इ ॥ शश्चप्रजाभ्याऽ२३४५ः ॥श्रीः॥
दिवोधर्त्तासीऽ२३४५ ॥ शुक्र ँपीयूषाऽ२३४५ः ॥ सत्येविधर्माऽ१न् ॥
वाजीपवस्वाऽ२३४५ ॥ औहोऽ३वा (द्विः) । औहोऽ२वाऽ२३४औहोऽ६वा ॥
एऽ३ । धर्माऽ२३४५ ॥ दी. ४५. उत्. १६. मा. ११. प. ॥१६९॥

१०. विशोविशीयम् ॥ अग्निः । गायत्री । पवमानस्सोमः ॥

हिन्वाहुम्स्थिताऽ३इध्न् ॥ राऽ३मूस्राऽ३याः । स्वसारः । जामा-
ऽ२३याः । हुम्माइ । पाऽ३ताऽ३इम् । माऽ२३४हा२हाइ ॥ ओ । हुवाइ ।
ईऽ२३४न्दूम् ॥ हुम्माइ । माऽ३हीऽ३ । यूऽ२३४वाः । एहियाऽ६हा ॥
श्रीः ॥ पवाहुम्स्थिमाऽ३ना ॥ रूऽ३चारूऽ३चा । देवदे । वाइभाऽ२३याः ।
हुम्माइ । स्तूऽ३ताऽ३ः । वाऽ२३४इश्वाहाइ ॥ ओ । हुवाइ । वाऽ२३४स्तु ॥
हुम्मा । नीऽ३याऽ३ । वाऽ२३४इशा । एहियाऽ६हा ॥श्रीः॥ आपाहुम्-
स्थिवाऽ३मा ॥ नाऽ३स्तष्टूऽ३तीम् । वृष्टिन्दे । वाइभाऽ२३याः । हुम्माइ ।
दूऽ३वाऽ३ः । आऽ२३४इपेहाइ ॥ ओ । हुवाइ । पाऽ२३४वा ॥ हुम्मा ।
स्वाऽ३साऽ३म् । याऽ२३४ताम् । एहियाऽ६हा । होऽ५इ ॥डा॥
दी. १७. उत्. ना. मा. ३४. यी. ॥१७०॥

११. औशनम् ॥ उशनाः काव्यः । गायत्री । अग्निः ।

प्रेष्ठंवाः ॥ अताऽ२३इथीम् । स्तौषेमित्रम् । इवप्राऽ२३याम् ॥ अग्नाइराऽ३थाऽ३म् ॥ नावाऽ२३हाऽ३४३इ । दाऽ२३४योऽ६"हाइ ॥श्रीः॥ कविमिवा ॥ प्रशꣳसाऽ२३याम् । यान्देवासः । इतिद्वाऽ२३इता ॥ निमार्तीऽ३येऽ३ ॥ पूवाऽ२३हाऽ३४३इ । दाऽ२३४घोऽ६"हाइ ॥ श्रीः ॥ तुवंयवाइ ॥ छदाशूऽ२३षाः । नूँꣳपाहिशृ । णुहीगाऽ२३इराः ॥ रक्षातोऽ३काऽ३म् ॥ ऊताऽ२३हाऽ३४३इ । त्माऽ२३४नोऽ६"हाइ ॥

दी. ७. उत् ५. मा. २१. ञ. ॥१७१॥

१२. सांवर्तम् ॥ इन्द्रः । उष्णिक । इन्द्रः ॥

एन्द्रनोऽ२गधिप्राया ॥ सात्राजित् । अगोह्यायौ । होऽ३वा ॥ गिराइर्नवौ । होऽ३वा ॥ श्वताः । पाऽ२थूऽ२३४औहोवा ॥ श्रीः ॥ अभिहिसाऽ२त्यसोमापाः ॥ ऊभेवभू । थरोदासौ । होऽ३वा ॥ इन्द्रासिसौ । होऽ३वा ॥ न्वतः । वाऽ२र्घाऽ२३४औहोवा ॥श्रीः॥ तुवꣳहिशाऽ२श्वताइनाम् ॥ आइन्द्रदर्ता । पुरामासौ । होऽ३वा ॥ हन्तादस्यौ । होऽ३वा ॥ मनोः । वाऽ२र्घाऽ२३४औहोवा ॥ पतिर्दिवाऽ१ः ॥

दी. १९. उत्. ९. मा. १३. धि, ॥१७२॥

१३. मारुतम् ॥ मरुतः । अनुष्टुप् । पवमानस्सोमः ॥

पुरांभिन्दुर्युवाकवीः ॥ अमितौजाअजायाऽ२३ता । आइन्द्रोविश्वाऽ३ । स्याकर्माऽ२३४णाः ॥ धर्त्ता । वाज्रीवाओऽ२३४वा ॥ पुरूऽ५ष्टुताः ॥ श्रीः ॥ तुवंवलस्यगोमताः ॥ अपावरद्रिवोवाऽ२३इलाम् ।

तूत्रान्देवाऽ३ः । आविभ्यूऽ२३४षाः ॥ तुज्या । मानौवाओऽ२३४वा ॥ सआऽ५विषूः ॥ श्रीः ॥ इन्द्रमीशानमोजसा ॥ अभिस्तोमैरनूषाऽ२३ता । साहस्रंयाऽ३ । स्याराताऽ२३४याः ॥ उता । वासौवाओऽ२३४वा ॥ तिभूऽ५यसीः । होऽ५इ ॥डा॥ दी. १७. उत्. ना. मा. १८. चै. ॥१७३॥

१४. अदारसृक् ॥ भरद्वाजः । गायत्री । पवमानस्सोमः ॥

हाउपवमाना ॥ स्यजाऽ२इन्नाताऽ२ः । हरेश्चन्द्राअसाऽ२क्षीताऽ२ । जीराऽ२आजाऽ२इ ॥ रशो । चाऽ२इषाऽ२३४औहोवा ॥ श्रीः ॥ हाउ-पवमानाः ॥ रथाऽ२इतामाऽ२ः । शुभ्रेभिश्शुभ्रशाऽ२स्तामाऽ२ः ॥ हराऽ२-इश्चान्द्राऽ२ः ॥ मरुत् । गाऽ२णाऽ२३४औहोवा ॥ श्रीः ॥ हाउपवमाना ॥ वियाऽ२श्नूहाऽ२इ । रश्मिभिर्वाजसाऽ२तामाऽ२ः ॥ दधाऽ२त्स्तोत्राऽ२इ ॥ सुवी । राऽ२याऽ२३४औहोवा ॥ अस्मभ्यंगातुवित्तमाऽ२३४५म् ॥

दी. २०. उत्. १०. मा. २३. मि. ॥१७४॥

१५. सुरुपोत्तरम् ॥ सुरूपः । गायत्री । पवमानस्सोमः ॥

पवमानौहोऽ२ । इया ॥ स्यजिन्नाताऽ२ः । हरेश्चन्द्रौहोऽ२ । इया । असृक्षाताऽ२ ॥ जीराअजौहोऽ२ । इया ॥ रशोचाऽ२३इषाऽ३४३ः ॥ श्रीः ॥ पवमानौहोऽ२ । इया ॥ रथीतामाऽ२ः । शुभ्रेभिश्शौहोऽ२ । इया । अशस्तामाऽ२ः ॥ हरिश्चन्द्रौहोऽ२ । इया ॥ मरुद्गाऽ२३णाऽ३४३ः । ॥श्रीः॥ पवमानौहोऽ२ । इया ॥ वियश्नूहाऽ२इ । रश्मिभिर्वौहोऽ२ । इया । जसातामाऽ२ः ॥ दधत्स्तोत्रौहोऽ२ । इया ॥ सुवीराऽ२३याऽ३४३म् ॥ ओऽ२३४५इ ॥डा॥ दी. १२. उत्. १८. मा. ११. ज. ॥१७५॥

१६. हरिश्रीनिधनम् ॥ अङ्गिरसः । गायत्री । पवमानस्सोमः ॥

पवमानस्यजिघ्नतः । पवमाना ॥ स्यजिघ्नताऽ२ः । हरेश्चन्द्रा-
असाहोऽ२ । द्वाताऽ२३ । हाउवा ॥ जीराआऽ२३जाइ ॥ रशो । चाऽ२-
इपाऽ२३४औहोवा ॥श्रीः॥ पवमानोरथीतमः । पवमानाः ॥ रथीतमाऽ२ः ।
शुभ्रेभिरशुभ्रशाहोऽ२ । स्तामाऽ२३ः । हाउवा ॥ हराइश्चाऽ२३न्द्राः ॥
मरुत् । गाऽ२णाऽ२३४औहोवा ॥ श्रीः ॥ पवमानवियश्नुहि । पवमाना ॥
वियश्नुहाऽ२इ । रश्मिभिर्वाजसाहोऽ२ । तामाऽ२३ः । हाउवा ॥ दधात्स्तो-
ऽ२३त्राइ ॥ सुवी । राऽ२याऽ२३४औहोवा ॥ हरिऽ३श्रीऽ२३४५ः ॥

दी. २२. उत्. ३. मा. १३. जि. ॥१७६॥

१७ सैन्धुक्षितम् ॥ सिन्धुक्षित् । गायत्री । पवमानस्सोमः ॥

पवमानो । हाइ ॥ स्यजिघ्नाऽ२३ताः । हरेश्चन्द्राअसाऽ१क्षीऽ३ता ॥
जीराजोऽ२३४हाइ ॥ राशोऽ३हाइ । चिपा । औऽ३होवा ॥श्रीः॥ पवमानो ।
हाइ ॥ रथीताऽ२३माः । शुभ्रेभिरशुभ्रशाऽ१स्ताऽ३माः ॥ हरिश्चन्द्रोऽ२३४-
हाइ ॥ मारूऽ३द्धाइ । गणा । औऽ३होवा ॥श्रीः॥ पवमानो । हाइ ॥
वियश्नूऽ२३हाइ । रश्मिभिर्वाजसाऽ१ताऽ३माः ॥ दधत्स्तोत्रोऽ२३४हाइ ॥
सुवाऽ३हाइ । रियाम् । औऽ२३होवा । होऽ५इ ॥डा॥

दी. ११. उत्. ६. मा. १७. के. ॥१७७॥

१८. गतनिधनबाभ्रवम् ॥ बभ्रुःकौम्भ्यः । गायत्री । पवमानस्सोमः ॥

पवमाना ॥ स्यजिघ्नाऽ२३ताः । हरेश्चन्द्राः । असृक्षाऽ२३ता ॥
जाइराऽ३हाइ । आजाऽ३इहाइ ॥ रशोऽ३होइ । चाऽ२इपाऽ२३४औहोवा ॥

श्रीः ॥ पवमानाः ॥ रथीताऽ२३माः । शुभ्रेभिरशु । अशस्ताऽ२३माः ॥
हाराऽ३इहाइ । चान्द्रोऽ३हाइ ॥ मरूऽ३द्धोइ । गाऽ२णाऽ२३४औहोवा ॥
श्रीः ॥ पवमाना ॥ वियश्नूऽ२३हाइ । रश्मिभिर्वा । जसाताऽ२३माः ॥
दाधाऽ३द्धाइ । स्तोत्रेऽ३हाइ ॥ सुवाऽ३होइ । राऽ२याऽ२३४औहोवा ॥
ग्वाऽ२३४भीः ॥ दी. १५. उत् . ६. मा. २४. पी. ॥१७८॥

१९. इडानां संक्षारः ॥ इडा । गायत्री । पवमानस्सोमः ॥

औहोइहुवाऽ३होइ । पवमानाऽ३स्याऽ३जिघ्नतः ॥ हरेश्चन्द्राऽ३-
आऽ३सृक्षत ॥ जीराआऽ२३४जाइ ॥ रशोचिषः । इडाऽ२३ ॥श्रीः॥
पवमानोऽ३राऽ३थीतमः ॥ शुभ्रेभिरशूऽ३भ्राऽ३शस्तमः ॥ हराइश्चाऽ२३४-
न्द्राः ॥ मरुद्गणः । इडाऽ२३ ॥श्रीः॥ पवमानाऽ३वीऽ३यश्नुहि ॥ रश्मि-
भिर्वाऽ३जाऽ३सातमः ॥ औहोइहुवाऽ३होइ । दधात्स्तोऽ२३४त्राइ ॥ सुवी-
रियम् ॥ इडाऽ२३भाऽ३ । एहीडा । होऽ५इ ॥डा॥
दी. १४. उत् . ३. मा. १८. दै. ॥१७९॥

२०. ऋषभ॰पवमानः ॥ ऋषभः । गायत्री । पवमानस्सोमः ॥

हाहाउपवमाना ॥ हाऽ३ । हाऽ३इ । स्याजाऽ२इघ्नाऽ२३४ताः ।
हरेश्चन्द्राअसाऽ१क्षाऽ३ता ॥ जीराआऽ२३४जाइ ॥ ओमोऽ३ । रशोवा ।
चाऽ५इषोऽ६"हाइ ॥ श्रीः ॥ हाहाउपवमानाः ॥ हाऽ३ । हाऽ३इ । राथा-
ऽ२इताऽ२३४माः । शुभ्रेभिरशुभ्रशाऽ१स्ताऽ३माः ॥ हरिश्चाऽ२३४न्द्राः ॥
ओमोऽ३ । मरोवा । गाऽ५णोऽ६"हाइ ॥श्रीः॥ हाहाउपवमाना ॥ हाऽ३ ।
हाऽ३इ । वायाऽ२श्नूऽ२३४हाइ ॥ रश्मिभिर्वियाऽ१जाऽ३सा: ॥

दधत्स्तोऽ२३४त्राइ ॥ ओमोऽ२ । सुवोवा । राऽ५योऽ६"हाइ ॥

दी. १५. उत्. ना. मा. १३. वि. ॥१८०॥

इति पञ्चमस्यार्द्धःप्रपाठकः ॥

नवमो विंशः ॥

१. पृष्ठम् ॥ प्रजापतिः । बृहती । पवमानस्सोमः ॥

पराऽ३इतोपिश्चतासुताम् ॥ सोमोयउत्तमꣳहवाऽ२३इहोइया । दधन्वाँयोनर्योअप्सुवन्तराऽ२३होइया ॥ सुपावाऽ२३सो ॥ ममद्राऽ२३-इभाऽ३४३इः ॥ श्रीः ॥ सुपाऽ३वसोममद्रिभाइः ॥ सुपावसोममद्रिभाऽ२३-इहोइया । नूनंपुनानोअविभिꣳपरिस्रवाऽ२३होइया ॥ अदब्धाऽ२३स्सू ॥ रभिन्ताऽ२३राऽ३४३ः ॥ श्रीः ॥ अदाऽ३ब्धस्सुरभिन्तराः ॥ अदब्धस्सुर-भिन्तराऽ२३होइया । सुतेचित्वाप्सुमदामोअन्धसाऽ२३होइया ॥ श्रीणन्तो-ऽ२३गो ॥ भिरुत्ताऽ२३राऽ३४३म् ॥ ओऽ२३४५इ ॥डा॥

दी. १९. उत्. ९. मा. १३. धि. ॥१८१॥

२. कौल्मलवर्हिषम् ॥ कुल्मलवर्हिः । बृहती । पवमानस्सोमः ॥

पराऽ३इतोऽ३पिश्चतासुताम् ॥ सोमोयउत्तमाऽ२ꣳहावाऽ२३४इः । दधन्वाँयोनर्योआ ॥ ऐहोइ । प्सूऽ२अन्तरा ॥ सुपावसोममोवाऽ३ओ-ऽ२३४वा । द्राऽ५इभोऽ६"हाइ ॥ श्रीः ॥ सुपाऽ३वाऽ३सोममद्रिभाइः ॥ सुपावसोममाऽ२द्राइभाऽ२३४इः । नूनंपुनानोअवाइभाइः ॥ ऐहोइ । पाऽ२-रिस्रवा ॥ अदब्धस्सुरभोवाऽ३ओऽ२३४वा । ताऽ५रोऽ६"हाइ ॥ श्रीः ॥ अदाऽ३ब्धाऽ३स्सुरभिन्तराः ॥ अदब्धस्सुरभाऽ२इन्ताराऽ२३४ः । सुतेचि-त्वाप्सुमादा ॥ ऐहोइ । मोऽ२अन्धसा ॥ श्रीणन्तोगोभिरोवाऽ३ओऽ२३४वा । ताऽ५रोऽ६"हाइ ॥

दी. २१. उत्. ६. मा. ३०. कौ. ॥१८२॥

३. अर्कपुष्पम् ॥ आदित्यः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चतासुतम् । हुवेऽ२३ ॥ सोमोयउत्तमꣳहविः । हुवेऽ२३ ॥ दधन्वाँयोनर्योअप्स्वन्तरा । हुवेऽ२३ ॥ सुषावसोममद्रिभिः । हुवेऽ२३ ॥ श्रीः ॥ सुषावसोममद्रिभिः । हुवेऽ२३ (द्वे । द्विः) ॥ नूनंपुनानोविभिꣳष्प-रिस्रव । हुवेऽ२३ ॥ अदब्धस्सुरभिन्तरः । हुवेऽ२३ ॥ श्रीः ॥ अदब्धस्सुर-भिन्तरः । हुवेऽ२३ (द्वे । द्विः) ॥ सुतेचित्वाप्सुमदामोअन्धसा । हुवेऽ२३ ॥ श्रीणन्तोगोभिरुत्तरम् ॥ हुवेऽ२३ । ( द्विः ) होवाऽ३हाऽ३ । हाऽ३४ । औहोवा ॥ अर्को देवानाऽ२म्परमेवियोऽ२माऽ२३४५न् ॥

दी. ३२. उत् . ८. मा. १३. जि. ॥१८३॥

४. दैर्घश्रवसम् ॥ दीर्घश्रवाः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चतासुतमोहाओहाऽ३ए ॥ सोमोयउत्तमꣳहविः । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ दधाऽ३४न्वाँयाः ॥ नारियः । अप्स्वअन्तरा । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ सुषाऽ३४वसोऽ३ ॥ ममोऽ२३४वा । द्राऽ५इभोऽ६"हाइ ॥ श्रीः ॥ सुषावसोममद्रिभिरोहाओहाऽ३ए ॥ सुषावसो-ममद्रिभिः । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ नूनाऽ३४म्पुना । नोअवि । भिꣳष्पारिस्रवा । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ अदाऽ३४ब्धस्सुऽ३ ॥ रभोऽ२३४वा । ताऽ५रोऽ६"हाइ ॥ श्रीः ॥ अदब्धस्सुरभिन्तरओहाओहा-ऽ३ए ॥ अदब्धस्सुरभिन्तरः । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ सुता-ऽ३४इचित्वा । आप्सुम । दामोअन्धसा । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ श्रीणाऽ३४न्तोगोऽ३ ॥ भिरोऽ२३४वा । ताऽ५रोऽ६"हाइ ॥

दा. २३. उत् . ७. मा. २७. ठे. ॥१८४॥

५. वैयश्वम् ॥ व्यश्वः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चतासुतम् ॥ सोमो । यउत्तमꣳहविः । दधान्वाꣳ-ऽ१याऽ२ः । नर्योअप्स्वन्तरा ॥ सुपावाऽ१सोऽ२ ॥ ममद्राऽ२३इभा-ऽ३४३इः ॥ श्रीः ॥ सुपावसोममद्राइभाइः ॥ सुषा । वसोममद्रिभिः । नूनाम्पूऽ१नाऽ२ । नोअविभिꣳपरिस्रव ॥ अदाब्धाऽ१स्सुऽ२ ॥ रभिन्ता-ऽ२३राऽ३४३ः ॥ श्रीः ॥ अदब्धस्सुरभिन्ताराः ॥ अदा । ब्धस्सुरभिन्तरः । सुताइचाऽ१इत्वाऽ२ । अप्सुमदामोअन्धसा ॥ श्रीणान्तोऽ१गोऽ२ ॥ भिरुत्ताऽ२३राऽ३४३म् । ओऽ२३४५इ ॥ डा ॥

दी. १५. उत्. १२. मा. २१. फ. ॥१८५॥

६. आभीशवाद्यम् ॥ अभीशुः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चतासुतम् । ए ॥ सोमोयउऽ३त्तामꣳहाविः ॥ दाऽ२३४-धा । हाइ ॥ न्वाँयोनर्योअप्स्वन्तारा ॥ स्वऽ२३४पा । हाइ ॥ वासोममो-ऽ२३४वा । द्राऽ५इभोऽ६"हाइ ॥ श्रीः ॥ सुषावसोममद्रिभिरे ॥ सुषा-वसोऽ३मामद्रिभाइः ॥ नूऽ२३४नाम् । हाइ ॥ पुनानोअविभिꣳपारिस्रावा ॥ आऽ२३४दा । हाइ ॥ ब्धास्सुरभोऽ२३४वा । ताऽ५रोऽ६"हाइ ॥ श्रीः ॥ अदब्धस्सुरभिन्तरए ॥ अदब्धस्सुऽ३राभिन्तारः ॥ सुऽ२३४ते । हाइ ॥ चित्वाप्सुमदामोअन्धासा ॥ श्राऽ२३४इणा । हा ॥ तोगोभिरोऽ२३४वा । ताऽ५रोऽ६"हाइ ॥

दी. १८. उत्. न. मा. २२. रा. ॥१८६॥

७. क्रतुवासिष्ठम् ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

श्रीणन्तोगोऽ२भिरुत्तराम् ॥ श्रीणन्तोगोभिरुत्तराम् । परिसुवा-

ऽ२३नाः । चाक्षसेदे । वमादाऽ१नाऽ२ः । औऽ२ । हौऽ२ । हुवाइ । औऽ३होऽ२३४वा ॥ क्रतुराऽ२३इन्दुः ॥ विचक्षाऽ२३णाऽ३४३ः । औऽ२३४५इ ॥डा॥

दी. ६. उत्. ४. मा. ९. घो. ॥१८७॥

८. महासामराजम् ॥ अङ्गिरसः । जगती । पवमानस्सोमः ॥

हाउहोवाऽ३हाइ । असावि सोमोऽ३आ । रुपोऽ३वाऽ३ । षाहरा-ऽ२३४५इः ॥ राजेवदस्मोऽ३आ । भिगाऽ३आऽ३ । चिक्रदाऽ२३४५त् ॥ पुनानोवारऽ३मा । तियाऽ३इषीऽ३ । अव्ययाऽ२३४५म् ॥ श्येनोनयोनि-ऽ३ङ्घा । तवाऽ३न्ताऽ३म् । आसदाऽ३दाउ ॥श्रीः॥ पर्जन्य४पिताऽ३मा । हिषाऽ३स्याऽ३ । पर्णिनाऽ२३४५ः ॥ नाभापृथिव्याऽ३गाइ । रिषूऽ३चाऽ३ । यन्दधाऽ२३४५इ ॥ स्वसारआपोऽ३आ । भिगाऽ३ऊऽ३त् । आसरा-ऽ२३४५न् ॥ सङ्ग्रावभिर्वऽ३सा । तेवाऽ३इतेऽ३ । अध्वराऽ३२उ ॥श्रीः॥ कविर्वेधस्याऽ३पा । रियाऽ३इषीऽ३ । माहिनाऽ२३४५म् ॥ अत्योनमृष्टो-ऽ३आ । भिवाऽ३जाऽ३म् । अर्षसाऽ२३४५इ ॥ अपसेधन्दुऽ३राइ । तासो-ऽ३माऽ३ । नोमृडाऽ२३४५ ॥ हाउहोवाऽ३हाइ । घृतावसानऽ३४पा । रियाऽ३सीऽ३ । निर्णिजाऽ३माउ"वाऽ३४५ ॥

दी. ३८. उत्. न. मा. ६१. र. ॥१८८॥

९. आयन्तीयम् ॥ प्रजापतिः । बृहती । इन्द्रः ॥

आयन्तइवसूऽ१रायाम् ॥ विश्वाऽ२इदिन्द्राऽ२ । स्यभाऽ२क्षाता । वासूनिजातोजनिमा । निथोजाऽ१साऽ२ ॥ प्रतिभागन्नदीऽ२धिमः । प्राऽ२३-

ती ॥ भागान्नाऽ३दा । हुम् । धिमाऽ३ः । ओऽ२३४वा ॥श्रीः॥ प्रतिभागन्नदा-ऽ१इधाइमाः॥ प्रताऽ२इभागाऽ२म्॥ नदाऽ२इधाइमाः। आलर्षिरातिंवसुदाम्। उपास्तूऽ१हाऽ२इ ॥ भद्राइन्द्रस्यरातयः। माऽ२३द्राः ॥ इन्द्रास्याऽ३रा। हुम्। तयाऽ३ः। ओऽ२३४वा ॥श्रीः॥ भद्राइन्द्रस्यराऽ१तायाः ॥ भद्राऽ२-इन्द्राऽ२। स्यराऽ२तायाः। योअस्यकामंविधतः। नरोषाऽ१ताऽ२इ ॥ मनोदानायचोदयन्। माऽ२३नाः ॥ दानायाऽ३चो। हुम्। दयाऽ३। ओऽ२३४वा ॥ हेऽ२३४५ ॥ दी. २०. उत्. ७. मा. २१. फ. ॥१८९॥

१०. समन्तम् ॥ वरुणः। बृहती। इन्द्रः॥

यतइन्द्रभयामहाइ ॥ ततोनोअभयङ्कृधाइ। मघवाऽ२३न्छा। ग्धाइतववत्। नऊताया। औहोऽ३४वाहाइ ॥ वि। द्वाइषोऽ२३वीऽ३। होवाऽ३हाइ ॥ मृधोजाऽ२३हाऽ३४३इ ॥ श्रीः ॥ विद्विषोविमृधोजहाइ ॥ विद्विषोवाइमृधोजहाइ। तुवश्हाऽ२३इरा। घासस्पतेरा। घसोमाहा। औहो-ऽ३४वाहाइ ॥ क्ष। यास्याऽ२३सीऽ३। होवाऽ३हाइ ॥ विधाऽ२३र्ता-ऽ३४३ ॥श्रीः॥ क्षयस्यासिविधर्ता ॥ क्षयस्यासीविधर्ता। तन्त्वावाऽ२३-याम्। माघवन्नि। द्रगाइर्वाणा। औहोऽ३४वाहाइ ॥ सु। तावाऽ२३न्ता-ऽ३ः। होवाऽ३हाइ ॥ हवामाऽ२३हाऽ३४३इ। ओऽ२३४५इ ॥डा॥ दी. २०. उत्. ६. मा. २४. पी. ॥१९०॥

११. आश्वसूक्तम् । आश्वसूक्तिः । गायत्री । पवमानस्सोमः ॥

आऔहोवाहाइ । तुवꣳसोमा ॥ सिधा । रयुः । ऐहीयैहीऽ१ । मान्द्रओजिष्ठोआध्वरे । ऐहीयैहीऽ१ ॥ आऽ२इ । पावाऽ२स्वामाऽ२ ॥ हयत् । राऽ२याऽ२३४औहोवा ॥ श्रीः ॥ आऔहोवाहाइ । तुवꣳसुताः ॥ मदाइ । तमः । ऐहीयैहीऽ१ । दाधन्वान्मत्सराइन्तमः । ऐहीयैहीऽ१ ॥ आऽ२इ । आइन्दूऽ२स्सात्राऽ२ ॥ जिद् । स्ताऽ२र्ताऽ२३४औहोवा ॥श्रीः॥ आऔहोवाहाइ । तुवꣳसुष्वा ॥ णोआ । द्रिभिः । ऐहीयैहीऽ१ । आभियर्ष-कनाइक्रदत् । ऐहीयैहीऽ१ ॥ आऽ२इ । द्यूमाऽ२न्ताꣳशूऽ२ ॥ ष्ममा । भाऽ२राऽ२३४औहोवा । शुक्रआहुताऽ२३४५ः ॥

दी. ३५. उत्. ७. मा. २८. फै. ॥१९१॥

१२. शाम्मदम् । शम्मदाङ्गिरसः । गायत्री । पवमानस्सोमः ॥

तुवꣳसोमासिऐ । हीऐहीऽ२३४या ॥ धारयुरैऽ२हीऐऽ२हीऽ३या । मन्द्रओजिष्ठोअध्वरऐऽ२हीऐऽ२हीऽ३या ॥ पावास्वामाऽ३१२३ ॥ हयो-ऽ२३४वा । राऽ५योऽ६"हाइ ॥श्रीः॥ तुवꣳसुतोमऐ । हीऐहीऽ२३४या ॥ दिन्तमऐऽ२हीऐऽ२हीऽ३या । दधन्वान्मत्सरिन्तमऐऽ२हीऐऽ२हीऽ३या ॥ आइन्दूस्सात्राऽ३१२३ ॥ जिदोऽ२३४वा । स्ताऽ५र्तोऽ६"हाइ ॥ श्रीः ॥ तुवꣳसुष्वाणऐ । हीऐहीऽ२३४या ॥ अद्रिभिरैऽ२हीऐऽ२हीऽ३या । अभि-यर्षकनिक्रददैऽ२हीऐऽ२हीऽ३या ॥ द्यूमान्ताꣳशूऽ३१२३ ॥ ष्ममोऽ२३४-वा । भाऽ५रोऽ६"हाइ ॥

दी. ११. उत्. ३. मा. २१. ग. ॥१९२॥

१३. दावसुनिधनम् ॥ दावसुराङ्गिरसः । गायत्री । पवमानस्सोमः ॥

तुवꣳसोऽ२३मासिधारयुर्हाउ ॥ मान्द्रओजि । ष्ठोआध्वाऽ१रा-ऽ२३इ । होवाऽ३हाइ ॥ पवास्वाऽ१माऽ२३ । होवाऽ३हा ॥ हयत् । राऽ२याऽ२३४औहोवा ॥श्रीः॥ तुवꣳसूऽ२३तोमदिन्तमोहाउ ॥ दाधन्वान्म । त्सराइन्ताऽ१माऽ२३ः । होवाऽ३हाइ ॥ इन्दूस्साऽ१त्राऽ२३ । होवाऽ३हा ॥ जिद् । स्ताऽ२ताऽ२३४औहोवा ॥ श्रीः ॥ तुवꣳसूऽ२३ष्वाणोअद्रिभिर्हाउ ॥ आभियर्ष । कनाइक्राऽ१दाऽ२३त् । होवाऽ३हाइ ॥ द्युमान्ताऽ१ꣳशूऽ२३ । होवाऽ३हा ॥ ष्ममा । भाऽ२राऽ२३४औहोवा ॥ एऽ३ । दावसूऽ२३४५ ॥

दी. १७. उत्. १०. मा. १८. वै. ॥१९३॥

१४. प्रतीचीनेडं काशीतम् ॥ काशीतः । गायत्री । पवमानस्सोमः ॥

त्वꣳसोमासि । धाऽ२रयूः ॥ मान्द्रओजि । ष्ठोआध्वराऽ२३४इ । हाहोइ ॥ पवस्वमाꣳहाऽ३यात् ॥ स्याइः । औऽ२३होवा ॥ श्रीः ॥ त्वꣳसुतोम । दाऽ२इन्तमाः ॥ दाधन्वान्म । त्सराइन्तमाऽ२३४ः । हाहोइ ॥ इन्दुस्सत्राजीऽ३दा ॥ स्तृता । औऽ३होवा ॥श्रीः॥ त्वꣳसुष्वाणः । आऽ२द्रिभाइः ॥ आभियर्ष । कनाइक्रदाऽ२३४त् । हाहोइ ॥ द्युमन्तꣳशू-ष्माऽ३मा ॥ भरा । औऽ३होवा ॥ ईडा ॥

दी. १०. उत्. ६. मा. १९. पो. ॥१९४॥

१५. हाविष्कृतम् ॥ हविष्कृत् । गायत्री । पवमानस्सोमः ॥

त्वꣳसोमासिधाहाउरायूः ॥ मन्द्रओजाइ । ष्ठोआध्वाऽ२३राइ ॥ पवाऽ२होऽ१ । स्वाऽ२३मा ॥ हयत् । राऽ२याऽ२३४औहोवा ॥ श्रीः ॥

२ र र र १ २ १ र २ १ —
त्वꣳसुतोमदाहाउन्तामाः ॥ दधन्वान्मा । त्सरिन्ताऽ२३माः ॥ इन्दूऽ२हों-
२ १ ^३ ५र र
ऽ१इ । साऽ२३त्रा ॥ जिद । स्ताऽ२ताँऽ२३४औहोवा ॥ श्रीः ॥
२ र र र १ २ १ २ १ —
त्वꣳसुष्वाणआहाउद्राइभाइः ॥ अभियर्षा । कनिक्राऽ२३दात् ॥ द्युमाऽ२-
२ १र ^३ ५र र २ १३
होऽ१ । ताऽ२३ꣳशू ॥ ष्ममा । भाऽ२राऽ२३४औहोवा ॥ हविष्कृते-
१ १ १
ऽ२३४५ ॥ दी. २०. उत्. १०. मा. २०. मौ. ॥१९५॥

१६. [१]स्वार[२]सौपर्णम् ॥ सुपर्णः । ककुप् । पवमानस्सोमः ।

२ र २ ३४५र ३४५र र १ ३ ५
त्वꣳह्यङ्गदैवाऽ३या ॥ पवमानजनिमानिद्युमा । हुम् । ताऽ२३४माः ॥
१ २ २ र १र २ १ ५ ४ ५
आमाऽ३उवा ॥ तात्वा । यघोऽ२३४वा । षाऽ५योऽ६"हाइ ॥ श्रीः ॥
२ र र २ ३र४र३४ र ३ ४५र १ ३ ५
अमृतत्वायघोषाऽ३यान् ॥ येनानवग्वाद्ध्यङ्ङपो । हुम् । णूऽ२३४ताइ ॥
१ २ २ १र २ १ ५ ४ ५
याइनाऽ३उवा ॥ विप्रा । सओऽ२३४वा । पाऽ५इरोऽ६"हाइ ॥ श्रीः ॥
२र र र २ ४र३र४र ३र४३४५ र १ ३ ५
येनविप्रासआपाऽ३इराइ ॥ देवानाꣳसुम्नेअमृतस्यचा । हुम् । रूऽ२३४णाः ॥
१-२ २ १र २ १ ५ ४ ५
याइनाऽ३उवा ॥ श्रवा । सियोऽ२३४वा । शाऽ५तोऽ६"हाइ ॥
दी. २२. उत्. ६. मा. २१. च. ॥१९६॥

१७. वैयश्वम् । (वैश्वमनसम् । विश्वमनाः ।) ककुप् । पवमानस्सोमः ॥

२ र र २ १ १र१र ^ ३२
पवस्वदेववीताऽ३याइ ॥ आइन्दोधाराऽ२ । भिरोऽ३४५ ।
१ र २ १ २ १ २र ३ १ १ १ १ — १ ^ ३
जसआकलशम्मधुमान्त्सोऽ२३४५ ॥ मनाऽ२ः ॥ सादाऽ२आऽ२३४-
५र र २ र २ १ २ १ ^ ३ २
औहोवा ॥ श्रीः ॥ तवद्रप्साउदप्रूऽ३ताः ॥ आइन्द्रंमदाऽ२ । यवाऽ३४५ ।
र र २र१र२र १ ३ १ १ १ १ — १ ^ ३
वृधुरात्वान्देवासोअमृताऽ२३४५ ॥ यकाऽ२म् ॥ पापूऽ२राऽ२३४-
५र र २र र २ १२र१र ^ ३ २
ओहोवा ॥ श्रीः ॥ आनस्सुतासइन्दाऽ३वाः ॥ पूनानाघाऽ२ । वताऽ३४५ ।

रयिमावृष्टिद्यावोरीत्यापाऽ२३४५ः ॥ सुवाऽ२ः ॥ वाइदाऽ२आऽ२३४-
औहोवा ॥ ऊऽ२३४५ ॥ दी. २७. उत्. न. मा. १९. यो. ॥१९७॥

१८. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

परि । स्यश्हाऽ३ । यंतश्हराइम् ॥ बभ्रुंपुनन्तिवारेणाऽ२३ । योदेवान्वाऽ३१२३इ । श्वाश्आऽ५इत्पराइ ॥ मादेनसाऽ३१२३ ॥ हगोवा । छाऽ५तोऽ६"हाइ ॥ श्रीः ॥ द्वियम् । पश्वाऽ३ । स्वयशसाम् ॥ सखा-योअद्रिसश्हताऽ२३म् । प्रायमिन्द्राऽ३१२३ । स्यकाऽ५मियाम् ॥ प्राप्सा-पयाऽ३१२३ ॥ तओवा । माऽ५योऽ६"हाइ ॥श्रीः॥ इन्द्रा । यसोऽ३ । मपातवाइ ॥ वृत्रघ्नेपरिषिच्यसाऽ२३इ । नारेचदाऽ३१२३- । क्षिणाऽ५वताइ । वाइरायसाऽ३१२३ ॥ दनोवा । साऽ५दोऽ६"हाइ ॥

दी. १४. उत्. न. मा. १९. लो. ॥१९८॥

१९. निह्नवम् ॥ वसिष्ठः । अनुष्टुप् । पवमानस्सोमः ॥

आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाइ । परिस्यश्ह-यंतऽ३श्हाराऽ३इम् । हाराइम् । हरा । ओऽ२३४वा । हाइ ॥ बभ्रुंपुन-न्तिवाऽ३रेणाऽ३ । रेणा । रेणा । ओऽ२३४वा । हाइ ॥ योदेवान्वि-श्वाश्इऽ३त्पाराऽ३इ । पाराइ । परा । ओऽ२३४वा । हाइ ॥ मदेनसहग-ऽ३च्छाताऽ३इ । छाताइ । छता । ओऽ२३४वा । हाइ ॥ श्रीः ॥ द्वियं-पश्वस्वयऽ३शासाऽ३म् । शासाम् । शसा । ओऽ२३४वा । हाइ ॥ सखा-योअद्रिसऽ३श्हाताऽ३म् । हाताम् । हता । ओऽ२३४वा । हाइ ॥ प्रिय-

मिन्द्रस्यकाऽ३मायाऽ३म् । मायाम् । मिया । ओऽ२३४वा । हाइ ॥
प्रस्नापयन्तऊऽ३मायाऽ३ः । मायाः । मया । ओऽ२३४वा । हाइ ॥श्रीः॥

इन्द्रायसोमपाऽ३तावाऽ३इ । तावाइ । तवा । ओऽ२३४वा । हाइ ॥
वृत्रघ्नेपरिपिऽ३च्यासाऽ३इ । च्यासाइ । च्यसा । ओऽ२३४वा । हाइ ॥
नरेचदक्षिणाऽ३वाताऽ३इ । वाताइ । वता । ओऽ२३४वा । हाइ ॥ वीरा-
यसदनाऽ३सादाऽ३इ । सादाइ । सदा । ओऽ२३४वा । हाइ । आइहीऽ३ ।
आइही । एहिया । ओऽ२३४वा । हाऽ३४ । औहोवा ॥ ईऽ२३४५ ॥

दी· २५· उत्· न· मा· ४४· बी· ॥१९९॥

२० यद्वाहिष्ठीयोत्तरम् ॥ अग्निः । अनुष्टुप् । पवमानस्सोमः ॥

परित्यꣳहर्यतꣳहरिम् । परित्यꣳहोवा ॥ यतꣳहराइम् । बभ्रुंपू-
ऽ२३ना । तिवारेणा । योदेवाऽ२३न्वाइ । श्वाꣳइत्पराइ ॥ मदेनाऽ२३सा ॥
हगच्छाऽ२३ताऽ३४३इ ॥ श्रीः ॥ द्वियंपश्चस्वयशसम् । द्वियंपश्चोवा ॥
स्वयशसाम् । सखायोऽ२३आ । द्रिसꣳहताम् । प्रियमाऽ२३इन्द्रा । स्य-
कामियाम् ॥ प्रस्नापाऽ२३या ॥ तऊर्माऽ२३याऽ३४३ः ॥ श्रीः ॥ इन्द्राय-
सोमपातवे । इन्द्रायसोवा ॥ मपातवाइ । वृत्रघ्नाऽ२३इपा । रिपिच्यसाइ ।
नरेचाऽ२३दा । क्षिणावताइ । वीरायाऽ२३सा । दनासाऽ२३दाऽ३४३इ ।
ओऽ२३४५इ ॥डा॥ दी· २१· उत्· १५· मा· २१· ङ· ॥२००॥

॥ इति पञ्चमप्रपाठकः ॥

॥ दशमो विꣳशः ॥

१. आसिताद्यम् ॥ असितः । अनुष्टुप् । पवमानस्सोमः ॥

परित्यश्हर्यताम् ॥ हराइम् । बभ्रुंपुनन्तिवारेऽ२३णा । योदेऽ२-
वान्वाऽ२इ । श्वाश्इत्पराइ ॥ मादेऽ२नासाऽ२ ॥ हगोवाऽ३ओऽ२३४वा ।
छाऽ५तोऽ६"हाइ ॥ श्रीः ॥ द्वियंपश्वस्वया ॥ शसाम् । सखायोअद्रिसश्हा-
ऽ२३ताम् । प्रायाऽ२माइन्द्राऽ२ । स्यकामियाम् ॥ प्रास्नाऽ२पायाऽ२ ॥
तओवाऽ३ओऽ२३४वा । माऽ५योऽ६"हाइ ॥ श्रीः ॥ इन्द्रायसोमपा ॥
तवाइ । वृत्रघ्नेपरिषिच्याऽ२३साइ । नारेऽ२चाद्राऽ२ । क्षिणावताइ ॥
वाइराऽ२यासाऽ२ ॥ दनोवाऽ३ओऽ२३४वा । साऽ५दोऽ६"हाइ ॥

दी. ९. उत् . ६. मा. २२. ता. ॥२०१॥

२. साध्रम् ॥ सध्रः । अनुष्टुप् । पवमानस्सोमः ॥

परित्याऽ३१हर्यतश्हराइम् ॥ बभ्रूंपुनाऽ२ । तिवाऽ३४५ । रेऽ२३४-
णा । योदेवान्विश्वाँइत्पराऽ२३४५इ ॥ मादाओऽ२३४वा । नासाओ-
ऽ२३४वा ॥ हगाऽ५च्छताइ ॥ श्रीः ॥ द्वियंपाऽ३श्वस्वयशसाम् ॥ सखायो-
आऽ२ । द्रिसाऽ३४५ । हाऽ२३४ताम् । प्रियमिन्द्रस्यकामियाऽ२३४५म् ॥
प्रास्नाओऽ२३४वा । पायाओऽ२३४वा ॥ तऊऽ५मयाः ॥ श्रीः ॥ इन्द्राया-
ऽ३सोमपातवाइ ॥ वृत्रघ्नेपाऽ२ । रिषाऽ३४५इ । च्याऽ२३४से । नरेच-
दक्षिणावताऽ२३४५इ ॥ वाइराओऽ२३४वा । यासाओऽ२३४वा ॥ दना-
ऽ५सदाइ । होऽ५इ ॥डा॥

दी. १२. उत् . ४. मा. २३. झि. ॥२०२॥

३. आकूपारम् ॥ अकूपारः काश्यपः । अनुष्टुप् । पवमानस्सोमः ॥

२ १ ४ ५ ३ ५ १ — १ २ र
परित्याऽ२३९हर्य । त॰हाऽ२३४राइम् ॥ बभ्रूऽ२म्पुना । तिवा-
१र २र र १ — र १ २र १ १ ४
रेणा । योदेवान्वाऽ२इ । श्वा॰इत्पराइ ॥ मदेनासाऽ२३ ॥ हाऽ२३गाऽ३ ।
२ ५ २ १ ४ ५ २ ३ ५
छाऽ३४५तोऽ६"हाइ ॥ श्रीः ॥ द्वियपाऽ२३श्वस्व । यशाऽ२३४साम् ॥
१ — १र २ १ २ १ — र १ २ र
सखाऽ२योश्रा । द्रिसॅहताम् । प्रियमाइन्द्राऽ२ । स्यकामियाम् ॥ प्रस्ना-
१ १ ४ २ ५ २ १र
पायाऽ२३ ॥ ताऽ२३ऊऽ३ । माऽ३४५योऽ६"हाइ ॥श्रीः॥ इन्द्रायाऽ२३-
४र ५ २र ३ ५ १ — १र २ १ २र १ —
सोम । पाताऽ२३४वाइ ॥ वृत्राऽ२घ्नेपा । रिपिच्यसाइ । नरेचादाऽ२-।
र १ २र र १ १ ४ २ ५
क्षिणावताइ ॥ वीरायासाऽ२३ ॥ दाऽ२३नाऽ३ । साऽ३४५दोऽ६"हाइ ॥

दी. १७. उत्. १९. मा. १७. चे. ॥२०३॥

४. विधर्म ॥ प्रजापतिः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

२र २ २र १ ^ ३ ५र ५ १ २र
ओहोऽ३वा ( द्विः ) । ओहोऽ२वाऽ२३४ओहोऽ६वा । पवस्वसोम-
१र २र ३ १ १ १ १ २र १ २ १र — १र — ३ १ १ १
महेदक्षायाऽ२३४५ ॥ अश्वोननिक्तोवाऽ२जीघनाऽ२याऽ२३४५ ॥ श्रीः ॥
१ र २र १र २र १ २ १ र ३ १ १ १ २ १ २ १र २ १र २ १र १ १ १
प्रतेसोतारोरसम्मदायाऽ२३४५ ॥ पुनन्तिसोममहेद्युम्नायाऽ२३४५ ॥ श्रीः ॥
१ २ र १ २ ३ १ १ १ २ १ २र १र २र १र २ १ १ १ १
शिशुञ्ज्ञानंहरिंमृजन्तीऽ२३४५ ॥ पवित्रेसोमंदेवेभ्यइन्दूऽ२३४५म् ॥ श्रीः ॥
१ २ र ३ १ १ १ २ १र २र ३ १ १ १ १ २र १ २ २र १र
पवस्वसोमाऽ२३४५ ॥ महेदक्षायाऽ२३४५ ॥ अश्वोननिक्ताऽ१ः ॥ वाजी-
— ३ १ १ १ १ र २र १र ३ १ १ १ १ २ १ र ३ १ १ १
घनाऽ२याऽ२३४५ ॥श्रीः॥ प्रतेसोताराऽ२३४५ः ॥ रसंमदायाऽ२३४५ ॥
२ १ २ १र १ १ १ २ १र २ १र १ १ १ १ २ ३र २
पुनन्तिसोमाऽ२३४५म् ॥ महेद्युम्नायाऽ२३४५ ॥श्रीः॥ शिशुञ्ज्ञानाऽ१म् ॥
२ ३ १ १ १ २ १ २र १र १ १ १ २र १र २ १ १ १ १
हरिंमृजन्तीऽ२३४५ ॥ पवित्रेसोमाऽ२३४५म् ॥ देवेभ्यइन्दूऽ२३४५म् ।

ओहोऽ३वा (द्विः)। ओहोऽ२वाऽ२३४ओहोऽ६वा ॥ एऽ३ । विधर्मा-
ऽ२३४५ ॥

दा. ४५. उत्. १०. मा. ११. म. ॥२०४॥

५. श्रुध्यम् ॥ प्रजापतिः । गायत्री । पवमानस्सोमः ॥

उपोषुजाऽ२तम् । अप्तुरोवा ॥ गोभिर्भङ्गाम् । परिष्कृताम् ।
इन्दुन्देवाअ । याऽ२३ ॥ सिषाउवा । श्रूधियाऽ२ ॥श्रीः॥ तमिद्वर्धाऽ२न्तु ।
नोगिरोवा ॥ वत्सꣳसꣳशाइ । श्वरीरिवा । यइन्द्रस्यहृ । दाऽ२३म् ।
सनाउवा ॥ श्रूधियाऽ२ ॥श्रीः॥ अर्षानस्सोऽ२म । शङ्ग्वोवा ॥ धुक्षस्वपाइ ।
प्युषीमिषाम् । वर्धासमुद्रम् । ऊ२३ । क्थियाउवा ॥ श्रूधियाऽ२ ॥ एऽ२३हि-
याऽ३४३ । ओऽ२३४५इ ॥डा॥ दी. १२. उत्. ६. मा. १४. ची. ॥२०५॥

६. ऐध्मवाहम् । इध्मवाहः । गायत्री । अग्नीन्द्रौ ॥

आघायेअग्निमिन्धाताइ ॥ स्तृणान्तिबर्हिरानुषाक् ॥ श्रीः ॥ बृहन्नि-
दिध्मआइषाम् ॥ भूरिशस्त्रंपृथुस्वरूः ॥ श्रीः ॥ अयुद्धइद्युधावार्ताम् ॥
शूरआजतिसत्वभाइः ॥ येषामिन्द्रोयुवाइहा ॥ ऊवाइ । ऊवोऽ२३४ ।
वा । साऽ५खोऽ६"हाइ ॥ दी. १२. उत्. ५. मा. १५. न्यु. ॥२०६॥

७. त्रैककुभम् ॥ त्रिककुप् । उष्णिक् । इन्द्रः ॥

यएकइद्विदायाऽ३ताइ ॥ वासुमर्तायाऽ३दा । हुम् । शूऽ२३४षाइ ।
आइशानोअप्रतिष्कुतः । आइशा । नोअप्रताइ ॥ ष्कूऽ२३४ताः ॥ श्रीः ॥
यश्चिद्धित्वाबहुभ्याऽ३आ ॥ सुतावाँआवीऽ३वा । हुम् । साऽ२३४ताइ ।
उग्रन्तत्पत्यतेशवः । ऊग्रम् । तत्पत्यताइ ॥ शाऽ२३४वाः ॥ श्रीः ॥

कदामर्तमराधाऽ३साम् ॥ पदाच्चुंपामीऽ३वा । हुम् । स्फूऽ२३४रात् ।

कदानश्शुश्रवद्गिरः । कादा । नश्शुश्रवात् ॥ गाऽ२३४इराः ॥ आइन्द्रोअ ।

गाऽ२ । याऽ२३४औहोवा ॥ ईऽ२३४न्द्राः ॥

दी. १८. उत्. २. मा. ३१. ठ. ॥२०७॥

८. उद्वंशीयम् ॥ विश्वेदेवाः । अनुष्टुप् । इन्द्रः ॥

गायन्तित्वागायत्रिणआ ॥ अर्चन्त्यर्कमर्कीऽ२३इणाः । ब्रह्माण-स्त्वाऽ२होऽ१इ । शतक्राऽ२३ताउ । उद्वंशमिवयाऽ१इमीऽ३रे ॥

उद्वंशाऽ२३४मी ॥ वायाऽ३२उवाऽ३ । उप् । माऽ२इरोऽ३५"हाइ ॥श्रीः॥

यत्सानोस्सान्वारुहआ ॥ भूर्यस्पष्टकर्तूऽ२३वाम् । तदिन्द्राऽ२होऽ१इ । अर्थश्वेताऽ२३ताइ । यूथेनवृष्णिराऽ१इजाऽ३ताइ ॥ यूथेनाऽ२३४वृ ॥

ष्णाइराऽ३२उवाऽ३ । उप् । जाऽ२तोऽ३५"हाइ ॥ श्रीः ॥ युङ्क्ष्वाहिके-शिनाहरीआ । वृषणाकक्षियाऽ२३प्रा । अथानाऽ२होऽ१इ । इन्द्रसोमा-ऽ२३पाः । गिरामुपश्रुताऽ१इश्चाऽ३रा ॥ गिरामूऽ२३४पा ॥ श्रूताऽ३२-उवाऽ३ । उप् । चाऽ२रोऽ३५"हाइ ॥ दी. २३. उत्. ४. मा. २७. ढे. ॥२०८॥

९. आजिगम् ॥ अजिगः । गायत्री । पवमानस्सोमः ॥

उच्चातेजा । तमान्धासाः ॥ दिविसद्भू । मायाऽ१दाऽ२३दाइ ॥ उग्रांशार्मा ॥ महिश्राऽ२३वाऽ३४३:॥श्रीः॥ सनाआइन्द्रा । ययाज्यावाइ ॥ वरुणाय । मारुद्भ्राऽ२३याः । वराइवोवीत् ॥ परिस्राऽ२३वाऽ३४३ ॥श्रीः॥ एनावाइश्वा । निआर्याआ ॥ द्युम्नानिमा । नृषाऽ२३णाम् ॥ सिषासान्ताः ॥

वनामाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

दी ६. उत् ३ मा. १६. गू. ॥२०९॥

१० आभीकम् ॥ अङ्गिरसः । गायत्री । पवमानस्सोमः ॥

ऊऽ२३४च्चातेजाऽ५ । तमौहोन्धासाः ॥ दिविसद्भूमियाऽ१दाऽ३दे ॥
उग्रꣳशाऽ२३४र्मा ॥ माहाऽ३२उवाऽ३४३ । श्राऽ३४५वोऽ६"हाइ ॥श्रीः॥
साऽ२३४नइन्द्राऽ५ । ययौहोज्यावाइ ॥ वरुणायमरूऽ१द्भ्याऽ३याः ॥
वरिवोऽ२३४वीत् ॥ पाराऽ३२उवाऽ३४३ । स्राऽ३४५वोऽ६"हाइ ॥ श्रीः ॥
आऽ२३४इनाविश्वाऽ५ । नियौहोर्याश्रा ॥ द्युम्नानिमानूऽ१षाऽ३णाम् ॥
सिषासाऽ२३४न्ताः ॥ वानाऽ३२उवाऽ३४३ । माऽ३४५होऽ६"हाइ ॥

दी. ११, उत्. १. मा. १५. कु ॥२१०॥

११. उत्सेधः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया । पः । वसाऽ३४औहोवा ॥ नोअर्षसाऽ२इ ।
हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ आराऽ३त्नधा । औहोवाहाइ ॥ योनिमृता ।
स्यसीदासि । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ उत्सोऽ३देवः । औहोवा-
हाइ ॥ हिराऽ३ण्याऽ५याऽ६५६ः ॥ श्रोः ॥ उत्सोदेवोहिरण्ययः । उत्सः ।
देवाऽ३४औहोवा ॥ हिरण्ययाऽ२ः । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥
दुहाऽ३नऊ । औहोवाहाइ ॥ धार्दिवियाम् । मधुप्रायम् । हाऽ३१उवाऽ२३ ।
ऊऽ३४पा ॥ प्रत्नाऽ३२सध । औहोवाहाइ ॥ स्थमाऽ३साऽ५दाऽ६५६त् ॥
श्रीः ॥ प्रत्नꣳसधस्थमासदत् । प्रत्नम् । सधाऽ३४औहोवा ॥ स्थमासदाऽ२त् ।

हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ आपाऽ३र्छियाम् । औहोवाहाइ । धारुणंवा । जियर्षासि । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ नृभाऽ३इर्धौतः । औहोवाहाइ ॥ विचाऽ२क्षाऽ५णाऽ६५६ः ॥ ऊऽ२३४५ ॥

दी. २८. उत्. ६. मा. ३४. टी. ॥२११॥

१२. यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । ककुबुत्तराबृहती । पवमानस्सोमः ॥

पुनाऽ५नः । सोऽ३माऽ३धाराया ॥ आपोवसा । नोऽ३आर्षाऽ३सी । आराऽ२त्नधायोनिमृ । तस्याऽ२३सा । हुम्माइ ॥ दाऽ३२साइ ॥ ऊत्सो-देवोहिराऽ२ण्ययाउ ॥ श्रीः ॥ ऊत्साः ॥ दाइवो । हाऽ३इराण्याऽ३याः । दुहाऽ२नऊधर्दिवि । यम्माऽ२३धू । हुम्माइ । प्राऽ३२याम् । प्रात्न२सध-स्थमाऽ२सदाउ ॥ श्रीः ॥ प्रात्नाम् ॥ साधा । स्थाऽ३मासाऽ३दात् । आपाऽ२र्छ्यन्धरुणम् । वाजाऽ२३या । हुम्माइ ॥ षाऽ३२साइ ॥ नृभि-र्धौतोविचाऽ२क्षणाउ ॥ वाऽ३४५ ॥

दी. १३. उत्. न. मा. १९. रो. ॥२१२॥

१३. निषेधः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमाऽ३धारया ॥ अपोवसा । नोअर्षसाऽ२इ । इहाऽ३ । आराऽ३त्नाधाः । हाहोऽ२३४हा । योनिमृता । स्यसीदाऽ२३साइ । इहाऽ३ ॥ ऊत्सोऽ३दाइवाः । हाहोऽ२३४हा ॥ हिराऽ३ण्याऽ५या-ऽ६५६ः ॥श्रीः॥ उत्सोदेवोहाऽ३इरण्ययाः ॥ उत्सोदेवो । हिरण्ययाऽ२ः । इहाऽ३ । दूहाऽ३नाऊ । हाहोऽ२३४हा । धार्दिवियाम् । मधुप्राऽ२३-याम् । इहाऽ३ ॥ प्रात्नाऽ३२साधा । हाहोऽ२३४हा ॥ स्थमाऽ३साऽ५दा-

ऽ६५६त् ।। श्रीः ।। प्रत्नꣳसधस्थाऽ३मासदात् ।। प्रत्नाꣳसधा । स्थमा-
सदाऽ२त् । इहाऽ३ ।। आपाऽ३छ्रीयाम् । हाहोऽ२३४हा ।। घारुणंवा ।
जियर्षाऽ२३साइ ।। इहाऽ३ ।। नृभाऽ३इर्धौताः । हाहोऽ२३४हा ।।
विचाऽ३क्षाऽ५णाऽ६५६ः ।। हेऽ२३४५ ।।

दी. ११. उत्. ९. मा. २१. घ. ।।२१३।।

१४. गौरीवितम् । गौरीवितिः । त्रिष्टुप् । पवमानस्सोमः ।।

आजा । गृवाऽ३इः । विप्रऋतताम् ।। मतीनाꣳसोम ᳲपुनानो-
असदच्चमूषूऽ२३ । सापन्तियाऽ३१२३म् । मिथुनासोनिकामाऽ५ध्वर्या ।।
वोरथिराऽ३१२३ ।। सस्सोवा । हाऽ५स्तोऽ६"हाइ ।। श्रीः ।। सपु ।
नानाऽ३ः । उपस्थराइ ।। दधानओभेअप्रारोदसीवीषआवाऽ२३ः । प्राया-
चिग्राऽ३१२३ । स्यप्रियसासऊतीसाऽ५तोघा ।। नाङ्कारिणाऽ३१२३इ ।।
नप्रोवा । याऽ५ꣳसोऽ६"हाइ ।। श्रीः ।। सव । धिताऽ३ । वर्धन ᳲपू ।।
यमानस्सोमोमीढ्वाँअभिनोज्योतिषावाऽ२३इत् । यात्रन ᳲपूऽ३१२३ । वंपि-
तर ᳲपदन्नास्सूऽ५वर्वाइ ।। दोअभिगाऽ३१२३ः । अद्रोवा । आऽ५इष्णो-
ऽ६"हाइ ।।

दी. ३७. उत्. न. मा. २४. यी. ।।२१४।।

१५. मैधातिथम् । मैधातिथिः । बृहती । इन्द्रः ।।

माचिदन्यदोहाइ ।। विशाऽ३ꣳसाता । सखायाऽ२होऽ१इ ।
मारौऽ३हो ।। राइषाउत्रा । ण्याताउवा ।। इन्द्रमित्स्तोतावृषणाऔऽ३हो ।।
साचाउवा । सुताउवा ।। मुहुरुक्थाऔऽ३हो । चशा । औहो । वाहो-

ऽ२३४वा । साऽ५तोऽ६"हाइ ॥ श्रीः ॥ मुहुरुक्थोहाइ ॥ चशाऽ३ँसाता ।
मुहुरूऽ२होऽ१ । कथाऔऽ३हो ॥ चाशाउवा । साताउवा ॥ अवक्रक्षिणं-
वृषभाऔऽ३हो ॥ याथाउवा । जूवाउवा ॥ गान्नचाऔऽ३हो । षणा ।
औहो । वाहोऽ२३४वा । साऽ५होऽ६"हाइ ॥ श्रीः ॥ गान्नचोहाइ ॥
षणाऽ३इसाहाम् । गान्नाऽ२होऽ१इ । चाऔऽ३हो ॥ षाणाउवा । साहाउवा ।
विद्वेषणँसवननमाऔऽ३हो ॥ भायाउवा । काराउवा ॥ मँहिष्ठमाऔ-
ऽ३हो । भया । औहो । वाहोऽ२३४वा । वाऽ५इनोऽ६''हाइ ॥

दी. १४. उत्. ९. मा. ३३. धि. ॥२१५॥

१६. अभीवतः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

उदूऽ३त्येऽ३माधुमत्तमोवा ॥ गाइरस्तोमा । सत्राइराऽ१ताऽ२इ ।
सात्राजितोऽ३१२३४ । घनसाअ । क्षितोताऽ१याऽ२ः ॥ वाजायाऽ१-
न्ताऽ२ः ॥ रथाऽ३ः । आऽ२३४५इ ॥ वाऽ२३४५ ॥ श्रीः ॥ वाजा-
ऽ३याऽ३न्तोरथाइवोवा ॥ वाजयन्तः । रथाआऽ१इवाऽ२ । काण्वाइवा-
ऽ३१२३४ । भृगवस्त्र । रियाआऽ१इवाऽ२ ॥ विश्वामाऽ१इद्धीऽ२ ॥
तमाऽ३ । शाऽ२३४५ ॥ ताऽ२३४५ ॥ श्रीः ॥ विश्वाऽ३माऽ३इद्धीतमाश-
तोवा ॥ वाइश्वमिद्धी । तमाशाऽ१ताऽ२ । आइन्द्रँस्तोमाऽ३१२३४इ ।
भिमंहय । तआयाऽ१वाऽ२ः ॥ प्रियामाऽ१इधाऽ२ ॥ सोआऽ३ । स्वा-
ऽ२३४५ ॥ राऽ२३४५न् ॥ दी. १३. उत्. ९. मा. २४. दू ॥२१६॥

१७. रोहितकूलीयम् ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

इन्द्रमच्छा ॥ सुताइमे । वृषणंयन्तुहरयश्रुष्टेजाऽ२३ता ॥ सा-ऽ२३ई ॥ दावस्सुवाऽ३१उवाऽ२३ ॥ वीऽ२३४दाः ॥ श्रीः ॥ अयंभरा ॥ यसानसिः । इन्द्रायपवतेसुतस्सोमोजाऽ२३इत्रा ॥ स्याऽ२३चे ॥ ताति-यथाऽ३१उवाऽ२३ ॥ वीऽ२३४दे ॥श्रीः॥ अस्येदिन्द्राः ॥ मदेष्वा । ग्राभ-ङ्गृभ्णातिसानसिंवज्रश्वाऽ२३वा ॥ षाऽ२३णाम् ॥ भारत्समाऽ३१उवाऽ२३॥ प्सूऽ२३४जीत् ॥ दी. १४. उत्. १. मा. ११. त. ॥२१७॥

१८. श्यावाश्वम् ॥ श्यावाश्वः । त्रिपदानुष्टुप्पिपीलिकामध्या । पवमानस्सोमः ॥

पराऽ३१इ । ऊऽ३षु । प्रध । न्वाऽ३वा । एहिया ॥ जा । सातयेपा । रि । वृत्राऽ२ । एहियाऽ२ । णिसक्षणाइन्द्रोऽ३इषाऽ३ः ॥ ताऽ२३४रा ॥ ऐहाऽ२इ । एहियाऽ२ । धियाऋणयानाऽ३ईऽ३ । राऽ३४५-सोऽ६"हाइ ॥श्रीः॥ अजाऽ३१इ । जाऽ३नो । हिप । वाऽ३मा । एहिया ॥ ना । सूरियंवाइ । घा । रेशाऽ२ । एहियाऽ२ । क्मनापयोगोऽ३जीऽ३ ॥ राऽ२३४या ॥ ऐहाऽ२इ । एहियाऽ२ । रँहमाणाॅपूऽ३राऽ३म् । घाऽ३४५योऽ६"हाइ ॥श्रीः॥ अनूऽ३१ । हाऽ३इत्वा । सुतम् । सोऽ३म । एहिया ॥ मा । दामसिमा । हे । समाऽ२ । एहियाऽ२ । यराजियेवा-ऽ३जॅऽ३ ॥ आऽ२३४भी ॥ ऐहाऽ२इ । एहियाऽ२ । पवमानाप्राऽ३-गाऽ३ । हाऽ३४५सोऽ६"हाइ ॥ दी. २३. उत्. ९. मा. १७. ढे. ॥२१८॥

१९. आन्धीगवम् ॥ अन्धीगुः । अनुष्टुप्पिपीलिकामध्या । पवमानस्सोमः ॥

पर्यूषुप्रधाऽ१न्वावा ॥ जसात । येपाऽ२३री । हुम्माऽ२१२ ।

वृत्राणिसक्षणिद्विंषस्तराऽ२३४५ ॥ घायाऽ३उवा ॥ णाऽ२याः । नाऽ२३ई । रसा । औऽ३होवा ॥ श्रीः ॥ अजीजनोहिपाऽ१वामा ॥ नख्वरि । यम्वा- ऽ२३इघा । हुम्माऽ२१२ । रेशक्मनापयोगोजीरयाऽ२३४५ ॥ राँऽहाऽ३- उवा ॥ माऽ२णाः । पूऽ२३राम् । धिया । औऽ३होवा ॥ श्रीः ॥ अनु- हित्वासुताऽ१ऽसोमा ॥ मदाम । सिमाऽ२३हे । हुम्माऽ२१२ । समर्य- राज्येवाजाऽअभीऽ२३४५ ॥ पावाऽ३उवा ॥ माऽ२ना । प्राऽ२३गा । हसा । औऽ३होवा । होऽ५इ ॥डा॥ दी. १८. उत्. ९. मा. १०. ढौ. ॥२१९॥

२०. वाङ्निधनसौहविषम् ॥ सुहविः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

प । येपारी ॥ प्रधन्वा । होवाऽ३होइ । इन्द्रायसोमा । होवा- ऽ३होइ । स्वादुर्मित्राया । होवाऽ३होऽ२३इ ॥ पूष्णौवाओऽ२३४वा ॥ भगाऽ५याउ ॥ श्रीः ॥ एव । एआइवा । एव । एआइवा ॥ अमृताया । होवाऽ३होइ । महेक्षयाया । होवाऽ३होइ । सशुक्रोअर्षा । होवाऽ३हो- २३इ ॥ दिव्यौवाओऽ२३४वा ॥ पीयूऽ५षाउ ॥ ॥ श्रीः ॥ इन्द्रः । एआइन्द्राः । इन्द्रः । एआइन्द्राः ॥ तेमोमा । होवाऽ३होइ । सुतस्यपेयात् । होवाऽ३होइ । क्रत्वेदक्षाया । होवाऽ३होऽ२३इ ॥ विश्वौवाओऽ२३४वा ॥ वदाऽ५इवाउ ॥ वा ॥ दी. १७. उत्. ५. मा. ३०. चौ. ॥२२०॥

षष्ठस्यार्द्धःप्रपाठकः ॥

एकादशो विंशः ॥

२१. वाजजित् ॥ प्रजापतिः । जगती । पवमानस्सोमः ॥

सूर्यस्येवा । रश्मयोद्रा । वायित्नवाः । होवाऽ३होइ ॥ मत्सरासाः । प्रसुतस्सा । कामीरताइ । होवाऽ३होइ ॥ तन्तुन्ततम् । परिसर्गा । साश्वा-शवाः । होवाऽ३होइ ॥ नेन्द्रादृताइ । पवतेघा । माकिश्चना । होवाऽ३-होऽ२ । वाऽ२३४औहोवा ॥श्रीः॥ उपोमताइः । पृच्यतेसाइ । च्यातेमधू । होवाऽ३होइ ॥ मन्द्राजनाइ । चोदतेश्रा । तारासनाइ । होवाऽ३होइ ॥ पवमानाः । सन्तनिरद्व । न्वातामिवा । होवाऽ३होइ ॥ मधुमान्द्रा । प्स ᳵपरिवा । रामषताइ । होवाऽ३होऽ२ । वाऽ२३४औहोवा ॥ श्रीः ॥ उक्षामिमाइ । तिस्रतिया । तोधेनवाः । होवाऽ३होइ ॥ देवस्यदाइ । वीरुपया । तीनिष्कृताम् । होवाऽ३होइ ॥ अत्यक्रमाइत् । अर्जुनम्वा । रामव्ययाम् । होवाऽ३होइ ॥ अत्कन्ननाइ । क्षंपरिसो । मोअव्यता । होवाऽ३होऽ२ । वाऽ२३४औहोवा ॥ वाजीजिगीवाविश्वाधनाऽ२नी-ऽ२३४५ ॥ दी. ४६. उत्. ३७. मा. ३६. खू. ॥२२१॥

२२. महावामदेव्यम् ॥ वामदेवः । विराट् । अग्निः ॥

आऽ५ग्निम् । नरोऽ३दाऽ३इधीतिभाइः ॥ आ । रण्योर्हस्तच्यु-तञ्जनयतप्रशस्तन्दूरे । दृ । औऽ३होहाइ । आ । रण्योर्हस्तच्युतञ्जन-यतप्रशस्तन्दूरे । दृ । औऽ३होहाइ । शङ्काऽ२३हेपा ॥ तिमौहोऽ३ । हुम्माऽ२ । थाऽ२व्योऽ३५"हाइ ॥ श्रीः ॥ ताऽ५म । ग्निमाऽ३स्ताऽ३-इवसवाः ॥ नाइ । अग्वन्त्सुप्रतिचक्षमवसेकुतश्चिदक्षायि । या । औऽ३हो-

२ १ र २र १ २ र२
हाइ । नाइ । अर्णवन्त्सुप्रतिचत्तमवसेकुतश्चिद्धायि । या । औऽ३होहाइ ।
१र २ ^ ३ र २ १ — १ ५ २
योदाऽ२३मआ ॥ सनौहोऽ३ । हुम्माऽ२ ॥ त्याऽ२योऽ३५''हाइ ॥श्रीः॥
३ ४ २ ४र ५ १ र२र १ २ र र १र २ १र
प्रेऽ५द्धः। आऽ३ग्नाऽ३इदीदिहाइ ॥ पू । रोनोअजस्रयासूम्र्यायविष्ठत्वाम् । शा ।
२ र२ १ र र र र र २ १र २ र२
औऽ३होहाइ । पू । रोनोअजस्रयासूम्र्यायविष्ठत्वाम् । शा । औऽ३होहाइ ।
१ २ ^ ३ र २ १ — १ ५ २
श्वन्ताऽ२३उपा ॥ यन्त्यौहोऽ३ । हुम्माऽ२ ॥ वाऽ२जोऽ३५''हाइ ॥

दी. ३४. उत्. न. मा. २६. लू. ॥२२२॥

इत्येकादशो विंशः ॥

इत्यूहगाने दशरात्रपर्व सम्पूर्णम् ॥

---

# अथोहगाने द्वितीयं संवत्सरपर्व ॥

॥ श्रीः ॥

१. आमहीयवम् ॥ अमहीयुः । गायत्री । पवमानस्सोमः ॥

ॐ ॥ वृषापा ऽ३वस्वधारया ॥ मरुत्वा ऽ१ता ऽ२इ । चमा ऽ२३-
त्सराः ॥ विश्वादधा ॥ नओ ऽ२३जसाउ । वा ऽ३ ॥ श्रीः ॥ तन्त्वाधा-
ऽ३तारमोणियोः ॥ पवामा ऽ१ना ऽ२ । सुवा ऽ२३र्दृशाम् ॥ हिन्वेवाजाइ ॥
षुवा ऽ२३जिनाउ । वा ऽ३ ॥ श्रीः ॥ अयाचा ऽ३इत्तोविपानया ॥ हराइ॒पा-
ऽ१वा ऽ२ । स्वघा ऽ२३रया । युजंवाजाइ ॥ षुचो ऽ२३दयाउ । वा ऽ३ ॥
स्तोषे ऽ३४५ ॥

दी. १३. उत्. ६. मा. १२. टा. ॥२२३॥

२. समन्तम्[२] ॥ अग्निः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया ॥ अपोवसानोअर्षसाइ । आरत्ना ऽ२३धाः ।
योनिमृत । स्यसाइदासा । औहो ऽ३४वाहाइ ॥ उत् । सोदा ऽ२३इवा ऽ३ः ।
होवा ऽ३हाइ ॥ हिरण्या ऽ२३या ऽ३४३ः ॥ श्रीः ॥ उत्सोदेवोहिरण्ययाः ॥
उत्सोदेवोहिरण्ययाः । दुहाना ऽ२३ऊ । धार्दिवियम् । मधूप्रायाम् । औहो-
ऽ३४वाहाइ ॥ प्र । त्नाꣳसा ऽ२३धा ऽ३ । होवा ऽ३हा ॥ स्थमासा ऽ२३दा-
ऽ३४३त् ॥श्रीः॥ प्रत्नꣳसधस्थमासदात् ॥ प्रत्नꣳसधास्थमासदात् । आपृ-
च्छा ऽ२३याम् । धारुणंवा । जियार्षासा । औहो ऽ३४वाहाइ ॥ नृ । भाइधौ-
ऽ२३ता ऽ३ः । होवा ऽ३हाइ ॥ विचक्षा ऽ२३णा ऽ३४३ः ॥ ओ ऽ२३४५इ ॥डा॥

दी. २३. उत्. १०. मा. २६. सू. ॥२२४॥

३. त्रवः ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

हा । वोऽ३हा । वेऽ३हाऽ३ । हा । ओऽ२३४वा । हाइ ऊत्सोदाऽ२३४इवो । हाइरण्याऽ२३४याः ॥ (द्वे । द्विः) । दूहानाऽ२३४ऊ घार्दाइवाऽ२३४याम् । माधुप्राऽ२३४याम् ॥ प्रात्नꣳसाऽ२३४धा । स्था मासाऽ२३४दात् ॥ हा । वोऽ३हा । वोऽ३हाऽ३ । हा । ओऽ२३४वा हाऽ३४ । औहोवा ॥ एऽ३ । अतिविश्वानिदुरितातरेमाऽ२३४५ ॥

दी. ५. उत् . न. मा. १२. वा. ॥२२५

४. दैर्घश्रवसम् ॥ दीर्घश्रवाः । बृहती । पवमानस्सोमः ॥

प्रत्नꣳसधस्थमासददोहाओहाऽ३ए ॥ प्रत्नꣳसधस्थमासदत् । ओऽ३ हा । ओऽ३हाऽ३एऽ३४ ॥ आपाऽ३४छियाम् ॥ धारुणम् । वाजायर्षसाइ ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ नृभाऽ३४इधौताऽ३ः ॥ विचोऽ२३४वा क्षाऽ५णोऽ६"हाइ ॥

दी. ८. उत् . ३. मा. ११. ङ. ॥२२६

५. पार्थम् ॥ पृथुः । त्रिष्टुप् । पवमानस्सोमः ॥

ओऽ३होऽ३होइ । प्रकावियाम् । उशने । वब्रुवाणाः ॥ देवोदेवा नाऽ३ज्ञनि । माविवक्ती ॥ महिव्रताः । शुचिब । धुꣳपवाकाः ॥ पदावरा । होऽ३अभि । आऽ३४३इ । तीऽ३राऽ५इ"भाऽ६५६न् ॥ श्रीः ॥ प्रहꣳसासाः । तृपला । वग्नुमच्छा ॥ अमादस्ताम् । वृषग । णाअयासूः ॥ अङ्गोषिणाम् । पवमा । नꣳसखायाः ॥ दुमर्षवा । णाऽ३म्प्रव । दाऽ३४३ । तीऽ३साऽ५"काऽ६५६म् ॥ श्रीः ॥ सयोजताइ । उरुगा । यस्यजूतीम् ॥ वृथाक्रीडा । ताऽ३म्मिम । तेनगावाः ॥ परीणसाम् । कृणुते । तिग्म-

ऽ५"ओऽ६५६ः ॥ दी. १६. उत्. २०. मा. २५. नु. ॥२२७॥

६. अभीवर्तः[3] ॥ अभीवर्तः । बृहती । इन्द्रः ॥

माचाऽ३इदाऽ३न्यद्विश२सतोवा ॥ साखायोमा । रिषाण्याऽ१-ताऽ२ । आइन्द्रमित्स्तोऽ३१२३४ । तावृषणम् । सचासूऽ१ताऽ२इ ॥ मुहूरूऽ१क्थाऽ२ ॥ चशाऽ३ । साऽ२३४५ ॥ ताऽ२३४५ ॥श्रीः॥ मुहूऽ३-रूऽ३क्थाचश२सतोवा ॥ मूहुरुक्था । चशा२साऽ१ताऽ२ । आवक्रक्षा-ऽ३१२३४इ । णंवृषभम् । यथाजूऽ१वाऽ२म् ॥ गान्नाऽ१चाऽ२ ॥ षणाऽ३इ । साऽ२३४५ ॥ हाऽ२३४५म् ॥ श्रीः ॥ गान्नाऽ३चाऽ३र्षणीस-होवा ॥ गान्नच । षणाइसाऽ१हाऽ२म् । वाइद्वेषणाऽ३१२३४म् । संवन-नमु । भयाङ्काऽ१राऽ२म् ॥ म२हाइष्ठाऽ१मूऽ२ ॥ भयाऽ३ । वाऽ२३४५इ ॥ नाऽ२३४५म् ॥ दी. ९. उत्. ८. मा. १७. दे. ॥२२८॥

७. जराबोधीयम्[1] ॥ अग्निः । गायत्री । पवमानस्सोमः ॥

यस्तेमदोवा ॥ वारेणियाः । तेनापाऽ२३वा । स्वअन्धासा ॥ देवावाऽ१इराऽ२३"घा । श । सहोऽ३४५इ ॥ डा ॥ श्रीः ॥ जघ्निर्वृत्रोवा ॥ आमित्रियाम् । सस्नाइर्वाऽ२३जाम् । दिवेदाइवाइ ॥ गोषाताऽ१इरा-ऽ२३"श्वा । साः । असोऽ३४५इ ॥डा॥श्रीः॥ सम्मिश्लओवा । रूपोभुवाः । स्वपास्थाऽ२३भीः । नधेनूभाइः ॥ सीदाञ्छ्याऽ१इनाऽ२३"ना । यो । निमोऽ३४५इ ॥डा॥ दी. १२. उत्. ९. मा. १९. झो. ॥२२९॥

८. सुज्ञानम् ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

इन्द्रमच्छा ॥ सुताइमाइ । वृषणांयाऽ२ । तुहरयाः ॥ श्रु जाताऽ२ ॥ सइ । दाऽ२वाऽ२३४औहोवा ॥ सुवर्विदएऽ३ ॥ श्रीः अयंभरा ॥ यसानसाइः । इन्द्रायापाऽ२ । वतेसुताः ॥ सोमोजाइत्राऽ२ स्यचे । ताऽ२ताऽ२३४औहोवा ॥ यथाविदएऽ३ ॥ श्रीः ॥ अस्येदिन्द्राः मदेषुवा । ग्राभङ्गाभ्णाऽ२ । तिसानसाइम् ॥ वज्रंश्वावाऽ२ ॥ षणम् भाऽ२राऽ२३४औहोवा ॥ समप्सुजिदेऽ३उपाऽ२३४५ ॥

दी. १९. उत्. १५. मा. १८. नै. ॥२३

९. तृतीयं क्रौञ्चम् ॥ क्रुङ्। अनुष्टुप्। पवमानस्सोमः ॥

पुरोजिता । होइ । वोअन्धसाऽ६ए ॥ सुताऽ२यमाऽ२ । दय ऽ३४५इ । त्ताऽ२३४वे । अपश्वानश्श्नथिष्टनाऽ२३४५ ॥ सखायोऽ२३दी घजिह्वाऽ२३याऽ३४३म् ॥ श्रीः ॥ सखायोदा । हो । घजिह्वियाऽ६मे । योघाऽ२रयाऽ२ । पावाऽ३४५ । काऽ२३४या । परिप्रस्यन्दतेसुताऽ१ः । इन्दुराऽ२३श्वाः ॥ नकृत्वाऽ२३याऽ३४३ः ॥ श्रीः ॥ इन्दुरश्वाः हो । नकृत्वियाऽ६ए ॥ तान्दूऽ२रोषाऽ२म् । अभाऽ३४५इ । नाऽ२३४राः सोमम्विश्वाचियाधियाऽ१ ॥ यज्ञायाऽ२३सा ॥ तुवद्राऽ२३याऽ३४३ः ओऽ२३४५इ ॥ डा ॥

दी. १६. उत्. ७. मा. १५. खु. ॥२३१।

१०. कावम् ॥ कविः । जगती । पवमानस्सोमः ॥

प्रोवा ॥ अयासीदिन्दुरिन्द्रा । स्यनिष्कातोऽ२म् । सखासख्युर्न-

प्रमिना । तिसङ्गाइराऽ२म् ॥ मर्यइवयुवतिभाइः । समर्षाताऽ२३इ ॥ सोमा-
ऽ३ ४काला । शेशतायाऽ२३ । मानाऽ३पाऽ५"थाऽ६५६ ॥श्रीः॥ प्रवोवा ॥
धियोमन्द्रयुवो । विपन्यूवाऽ२ः । पनस्युवस्सम्वरणाइ । षुवक्रामूऽ२ः ॥
हरिङ्क्रोडन्तमभ्यनू । षतस्तूभाऽ२३ः ॥ आभीऽ३धेना ॥ व ४पयासाऽ२३-
इत् । आशाऽ३इआऽ५"यूऽ६५६ः ॥ श्रीः ॥ आनोवा ॥ सोमसम्यतम्पाइ ।
प्युषीमाइषाऽ२म् । इन्दोपवस्वपवमा । नऊर्माइणाऽ२ ॥ यानोदोहते-
त्रिरहान् । असश्चूषाऽ२३इ ॥ चूमाऽ३द्वाजा । वन्मधूमाऽ२३त् ।
स्वाऽ३इराऽ५"याऽ६५६म् ॥ दी. १५. उत्. १९. मा. २५. मु. ॥२३२॥

११ सत्रासाहीयम् ॥ इन्द्रः । गायत्री । अग्निः ॥

अग्नाऽ३४इम् । वोवृधन्तम् । ओऽ६वा ॥ अध्वराणांपुरूताऽ२-
माम् । आऽ२च्छा । नाऽ२३प्त्रे ॥ सहौऽ३हो । वाहाऽ३४३इ ॥ स्वा-
ऽ२३४तोऽ६"हाइ ॥ श्रीः ॥ अयाऽ३४म् । यथानआभुवत् । ओऽ६वा ॥
त्वष्टारूपेवतक्षाऽ२या । आऽ२स्या । क्राऽ२३त्वा ॥ यशौऽ३हो । वाहा-
ऽ३४३इ ॥ स्वाऽ२३४तोऽ६"हाइ ॥श्रीः॥ अयाऽ३४म् । विश्वाअभिश्रियः ।
ओऽ६वा । अग्निर्देवेषुपत्याऽ२ताइ । आऽ२वा । जाऽ२३इरू ॥ पनौऽ३हो ।
वाहाऽ३४३इ ॥ गाऽ२३४मोऽ६"हाइ ॥ दी. १८. उत्. ना. मा. १८. रै. ॥२३३॥

१२. आश्वम् ॥ अश्वः । गायत्री । पवमानस्सोमः ॥

प्रसोमासोऽ२विपश्चिताः ॥ अपोनयन्तऊर्माऽ२याः ॥ वनानिमा-
ऽ२३ही ॥ षाऽ३२उवाऽ३ ॥ वाऽ२३४५ ॥ श्रीः ॥ अभिद्रोणाऽ२निब-

अ्वाः ॥ शुक्राऋतस्यधाराऽ२या ॥ वाजङ्गोमाऽ२३न्ताम् ॥ आक्षा-
ऽ३२उवाऽ३ ॥ राऽ२३४५न् ॥श्रीः॥ सुताइन्द्राऽ२यवायवाइ ॥ वरुणाय-
मरुद्भ्याऽ२याः ॥ सोमाअर्षाऽ२३न्तू ॥ वाइष्णाऽ३२उवाऽ३ ॥ वा-
ऽ२३४५इ ॥ दी. १५. उत्. ५. मा. १६. मू. ॥२३४॥

१३. पञ्चम् ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

प्रसोऽ४म । दाऽ४इववी । तयाऽ३इ । साइन्धूः ॥ नपाइ ।
प्येआणासाऽ३ । आ२शो४पयाऽ३ । सामाऽ२दाऽ२३४इराः ॥ नजा ॥
गृवौवाओऽ२३४वा । अच्छा । कोशौवाओऽ२३४वा ॥ मधूऽ५श्चुताम् ॥
श्रीः ॥ अच्छाऽ४को । शाऽ४म्मधु । श्चुताऽ३म् । आच्छा ॥ कोशाम् ।
मधूश्चूताऽ३म् । आहयतोऽ३ । अर्जूऽ२नोऽ२३४आ ॥ क्तेअ । व्यतौवा-
ओऽ२३४वा । प्रियः । सूनौवाओऽ२३४वा ॥ नमाऽ५जियाः ॥ श्रीः ॥
प्रियाऽ४स्सू । नूऽ४नम । जियाऽ३ः । प्रायाः ॥ सूनूः । नमार्जायाऽ३ः ।
तामी२हिन्वाऽ३ । तियाऽ२याऽ२३४साः ॥ यथा । रथौवाओऽ२३४वा ।
नदी । पुवौवाओऽ२३४वा ॥ गभाऽ५स्तियोः । होऽ५इ ॥डा॥

दी. १६. उ. ३. मा. २९. गो. ॥२३५॥

१४ अभीवर्तः ॥ अभीवर्त । बृहती । इन्द्रः ॥

तंवोऽ३दाऽ३स्मामृतीषहोवा ॥ वासोमन्दा । नमान्धाऽ१साऽ२ः ।
आभिवत्साऽ३१२३४म् । नस्वसरे । षुधाइनाऽ१वाऽ२ः ॥ इन्द्राङ्गाऽ१-
इर्भीऽ२ः ॥ नवाऽ३ । माऽ२३४५ ॥ हाऽ२३४५इ ॥श्रीः॥ इन्द्राऽ३ङ्गाऽ३-

इभिर्नवामहोवा ॥ आइन्द्रङ्गीभिः । नवामाऽ१हाऽ२इ । ग्रूक्ष२सुदाऽ३१-
२३४ । नुन्तविषी । भिरावाऽ१र्ताऽ२म् ॥ गिराइन्नाऽ१पूऽ२ ॥ रुभोऽ३ ।
जाऽ२३४५ ॥ साऽ२३४५म् ॥ श्रीः ॥ गिराऽ३इन्नाऽ३पुरुभोजसोवा ॥
गाइरिन्नपु । रुभोजाऽ१साऽ२म् । चूमन्तंवाऽ३१२३४ । जश्शतिनम् ।
सहास्राऽ१इणाऽ२म् ॥ मच्चूगोऽ१माऽ२ ॥ तमाऽ३इ । माऽ२३४५ ॥
हाऽ२३४५इ ॥ दी. ८. उत्. ९. मा. २२. ढा. ॥२३६॥

१५. सुज्ञानम् ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

पवतेहा ॥ यंतोहराइः । अतिह्वाराऽ२ । सिर२ह्रिया ॥ अभि-
यार्षाऽ२ ॥ स्तोतृ । भ्योऽ२वाऽ२३४औहोवा ॥ रवद्यशाएऽ३उपाऽ२३४५॥
दी. ५. उत्. ५. मा. ५. मु. ॥२३७॥

१६. काशीतम् ॥ काशीतः । उष्णिक् । पवमानस्सोमः ॥

पवतेहा ॥ यंतोहाऽ२३राऽ३४इः । अतिह्वरा ॥ सिर्२ह्राऽ२३-
याऽ३४ ॥ अभियर्षा ॥ स्तोतृभ्योवीरवत् । याऽ२ । शाऽ२३४ । औहोवा ॥
ऊऽ२३४पा ॥ दी. ७. उत्. ३. मा. ३. जि. ॥२३८॥

१७. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसु । न्वानाऽ३ । यअन्धसाः ॥ मर्तोनवष्टतद्वचाऽ२३ः । आप-
श्वानाऽ३१२३म् । अराऽ५घसाम् ॥ हातामखाऽ३१२३म् ॥ नभोवा ।
गाऽ५वोऽ६'' हाइ ॥ श्रीः ॥ आजा । मिराऽ३ । त्केअव्यता ॥ भुजेनपुत्र-
ओणियोऽ२३ः । सारजाराऽ३१२३ः । नयोऽ५षणाम् ॥ वारोनयो-

ऽ३१२३ ॥ निमोवा । साऽ५दोऽ६"हाइ ॥ श्रीः ॥ सवी । रोदाऽ३ । क्षसाधनाः ॥ वियस्तस्तम्भरोदसाऽ२३इ । हारि॰पवाऽ३१२३इ । त्रेआ-ऽ५व्यता ॥ वाइधानयोऽ३१२३ ॥ निमोवा । साऽ५दोऽ६"हाइ ॥

दी. १७. उत्. न. मा. १९. यो. ॥ ३९॥

१८. ओकोनिधनम् ॥ प्रहितिः । अनुष्टुप् । पवमानस्सोमः ॥

आजाऽ३मिरत्केअव्यता । भुजाइ । नपुत्रओऽ२णायोऽ२ः । सर-ज्ञारोनयोऽ२पाणाऽ२म् ॥ वरोनाऽ२३४यो ॥ निमा । साऽ२दाऽ२३४-ओहोवा ॥ ओऽ२३४काः ॥

दी. ८. उत्. ३. मा. ७. डे. ॥२४०॥

१९. औदलम् ॥ उदलः । अनुष्टुप् । पवमानस्सोमः ॥

सवीरोदा ॥ क्षासाऽ२धनाः । वियस्तस्ताऽ३ । भारोदाऽ२३४-साइ ॥ हरि॰पवाइ ॥ त्रेआऽ२व्यता । वेधानाऽ२३योऽ३ । नाऽ२३-इमाऽ३ । साऽ३४५दोऽ६"हाइ ॥

दी. ४. उत्. २. मा. ६. थू. ॥२४१॥

२०. साध्रम् ॥ साध्रः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसुन्वाऽ३नायअन्धसाः ॥ मर्तोनिवाऽ२ । ष्टताऽ३४५त् । वा-ऽ२३४चाः । अपश्वानमराधसाऽ२३४५म् ॥ हाताओऽ२३४वा । माखाओ-ऽ२३४वा ॥ नभृऽ६गवाः ॥ श्रीः ॥ आजामाऽ३इरत्केअव्यता ॥ भुजाइन-पूऽ२त् । त्रओऽ३४५ । णीऽ२३४योः । सरज्ञारोनयोपणाऽ२३४५म् ॥ वाराओऽ२३४वा । नायाओऽ२३४वा ॥ निमाऽ५सदाम् ॥ श्रीः ॥ सवीरो-ऽ३दक्षसाधनाः ॥ वियास्तस्ताऽ२ । भरोऽ३४५ । दाऽ२३४सी । हरि॰प-वित्रेअव्यताऽ२३४५ ॥ वाइधाओऽ२३४वा । नायाओऽ२३४वा ॥

निमाऽ५सदाम् । होऽ५इ ॥डा॥ दी. १२. उत्. ३. मा. २५. जु. ॥२४२॥

प्रथमो वि१ँशः ॥

षष्ठःप्रपाठकः ॥

१. हाविष्मतम् ॥ हविष्मान् । गायत्री । पवमानस्सोमः ॥

हाउवृषापवस्वधारयाहाउ । मरुत्वताऽ३इ । चामत्साऽ२३४राः । ऐऽ२होऽ१आऽ२३इही ॥ विश्वादाऽ३धा ॥ नओ । जाऽ२साऽ२३४औहोवा ॥ श्रीः ॥ हाउतन्त्वाधर्तारमोण्योहाउ ॥ पवमानाऽ३ । स्वर्दृऽ२३४शाम् । ऐऽ२होऽ१आऽ२३इही ॥ हिन्वेवाऽ३जाइ ॥ षुवा । जाऽ२इनाऽ२३४-औहोवा ॥ श्रीः ॥ हावयाचित्तोविपानयाहाउ ॥ हरिःपवाऽ३ । स्वाधारा-ऽ२३४या । ऐऽ२होऽ१आऽ२३इही ॥ युजाम्वाऽ३जाइ ॥ षुचो । दाऽ२या-२३४औहोवा ॥ हविष्मतेऽ२३४५ ॥ दी. २४. उत्. ७. मा. २१. थ. ॥२४३॥

२. यौक्ताश्वोत्तरम् ॥ युक्ताश्वः । गायत्री । पवमानस्सोमः ॥

वृषाऔहोहोहाइ ॥ पवऽ३स्वाधाऽ१रायाऽ३ ॥ मारूऽ२त्वाऽ२३४-ताइ । चमाऽ३ । ओइ । चमाऽ२त्साऽ२३४राः ॥ विश्वाऔहोहोहाइ ॥ दधाऽ२नाऽ२३४ओ । जाऽ२साऽ२३४औहोवा ॥ श्रीः ॥ तन्त्वा-औहोहोहाइ ॥ धर्ताऽ३रामोऽ१णायोऽ३ः । पावाऽ२माऽ२३४ना । सुवाऽ३ । ओइ । सुवाऽ२र्दृऽ२३४शाम् ॥ हिन्वाऔहोहोहाइ ॥ वाजाऽ२-इषूऽ२३४वा । जाऽ२इनाऽ२३४औहोवा ॥ श्रीः ॥ अयाऔहोहोहाइ ॥ चित्तोऽ३वाइपाऽ१नायाऽ३ । हाराऽ२इःपाऽ२३४वा । स्वधाऽ३ । ओ । स्वधाऽ२राऽ२३४या ॥ युजाऔहोहोहाइ ॥ वाजाऽ२इषूऽ२३४चो । दाऽ२-

याऽ२३४औहोवा ॥ ओइ । जूऽ२३४वा ॥

दी. २२. उत् . ६ मा. २८. चै. ॥२४४॥

३. [1]माधुश्छन्दसम् ॥ मधुच्छन्दाः । बृहती । पवमानस्सोमः ॥

परीतोषा । होइ । चतासुताऽ६मे ॥ सोमोयऊ । तामश्हाऽ२३४-

वीः । दधन्वाँयोनर्योअ । प्सुवान्तारा । औहोऽ२३४वाहाइ ॥ सुषावासो ।

औहोऽ२३४वाहा ॥ ममद्राऽ२३इभाऽ३४३इः । ओऽ२३४५इ ॥डा॥

दी. १२. उत्. ५. मा. ९. ञो. ॥२४५॥

४. ऐडमायास्यम् ॥ अयास्यः । बृहती । पवमानस्सोमः ॥

आइपराइ ॥ तोषाइ । चतासुताम् । सोमोयऊऽ३१ । तमश्हवाइः ।

दाधन्वाँयाऽ३१ः । नर्योआ । प्सुवन्तरा ॥ सुषावसोऽ३१ ॥ ममद्रा-

ऽ२३इभाऽ३४३इः ॥ श्रीः ॥ आइसुषा ॥ वासो । ममद्रिभाइः । सुषा-

वसोऽ३१ । ममद्रिभाइः । नूनंपुनाऽ३१ । नोअविभाइः । परिस्रवा ॥

आदब्धस्सुऽ३१ । रभिन्ताऽ२३राऽ३४३ः ॥ श्रीः ॥ आअदा ॥ ब्धास्सु ।

रभिन्तराः । आदब्धस्सुऽ३१ । रभिन्तराः । सुतेचित्वाऽ३१ । प्सुमदा ।

मोअन्धसा ॥ आइणन्तोगोऽ३१ ॥ भिरुत्ताऽ२३राऽ३४३म् । ओ-

ऽ२३४५इ ॥डा॥

दी. १०. उत्. १२. मा. २८. फै. ॥२४६॥

५. [1]त्रिणिधनमायास्यम् ॥ अयास्यः । बृहती । पवमानस्सोमः ॥

श्रोणन्तोगोभिरूहाउहोवा । तारश्आऽ२३४इणा । तोगोऽ२ ।

भिरूऽ३४५ । ताऽ२३४राम् ॥ पराऽ३४ । औहोवा ॥ स्वानश्रक्षसेदाऽ२इ ।

वमाऽ३४५ । दाऽ२३४नाः ॥ क्रतूऽ३४ । औहोवा ॥ आइन्दूऽ२ः

विचाऽ३४५ ॥ क्षाऽ२३४णाः ॥ दी. १२. उत्. २. मा. ८. छै. ॥२४७॥

६. पार्थम् ॥ पृथुर्वैन्यः । त्रिष्टुप् । पवमानस्सोमः ॥

ओऽ३होऽ३होइ । वृषाशोणो । अभिक । निक्रदद्गाः ॥ नदयन्नाइ । पीऽ३पृथि । वीमुतद्याम् ॥ इन्द्रस्येवा । वग्नुरा । शृण्वआजाउ ॥ प्रचोदयान् । अर्षसि । वाऽ३४३ । चाऽ३माऽ५"माऽ६५६म् ॥ श्रीः ॥ रसायियाः । पयसा । पिन्वमानाः ॥ ईरयन्नाइ । षीऽ३मधु । मन्तमंशूम् ॥ पवमाना । सन्तनिम् । एषिकृण्वान् ॥ इन्द्रायसो । माऽ३परि । षाऽ३४३इ । च्याऽ३माऽ५"नाऽ६५६ः ॥ श्रीः ॥ एवापवा । स्वाऽ३मदि । रोमदाया ॥ उदग्राभा । स्याऽ३नम । यन्वघस्नूम् ॥ परिवर्णाम् । भरमा । णोरुशन्ताम् ॥ ओऽ३होऽ३होइ । गव्युर्नोआ । षाऽ३परि । सोऽ३४३ । माऽ३साऽ५इ"क्ताऽ६५६ः ॥ दी. १५. उत्. १८. मा. २४. बी. ॥२४८॥

७. अभीवर्तः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

अभाऽ३इप्राऽ३वस्सुराधसोवा ॥ आइन्द्रमर्च । यथावाऽ१इदाऽ२इ । योजरितृऽ३१२३४ । भ्योमघवा । पुरूवाऽ१सूऽ२ः ॥ सहास्रेऽ१णाऽ२इ ॥ वशाऽ३इ । क्षाऽ२३४५ ॥ ताऽ२३४५इ ॥ श्रीः ॥ सहाऽ३स्रेऽ३णेवशिक्षतोवा ॥ साहस्रेणे । वशाइक्षाऽ१ताऽ२इ । शातानीकाऽ३१२३४इ । वज्रजिगा । तिघाष्णूऽ१याऽ२ ॥ हन्ताइवाऽ१त्रोऽ२ ॥ णिदाऽ३ । शूऽ२३४५ ॥ षाऽ२३४५इ ॥ श्रीः ॥ हन्ताऽ३इवाऽ३त्रोणिदाशुषोवा ॥ हान्तिवृत्रा । णिदाशूऽ१षाऽ२इ । गाइरेरिवाऽ३१२३४ ।

प्ररसाग्र । स्यपाइन्वाऽ१इराऽरइ ॥ दत्राणाऽ१इपूऽरे । रुभोऽ३ । जाऽर३४५ ॥ साऽर३४५ः ॥ दी. १२. उत्. ९ मा. २२ झा. ॥२४९॥

८. शङ्कु ॥ प्रजापतिः । ककुप् । पवमानस्सोमः ॥

पवस्वमा । एऽर । धुमा ॥ तमाः । इन्द्रायसोमक्रतुवित्तमोमा-ऽर३दाः ॥ माहीऽरद्यूक्षाऽर३ ॥ तमोऽर३४वा । माऽ५दोऽ६"हाइ ॥ श्रीः ॥ महिद्युक्षा । एऽर । तमाः ॥ मदो । यस्यतेपीत्वावृषभोवृषाया-ऽर३ताइ ॥ आस्याऽरपाइत्वाऽर३ ॥ सुवोऽर३४वा । वाऽ५इदोऽ६"हाइ ॥ श्रीः ॥ अस्यपीत्वा । एऽर । सुवाः ॥ विदाः । ससुप्रकेतोअभियक्रमीदा-ऽर३इषाः ॥ आच्छाऽरवाजाऽर३म् ॥ नत्रोऽर३४वा । ताऽ५-शोऽ६"हाइ ॥ दी. १५. उत् . ४. मा. १६. भू. ॥२५०॥

९. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

अयम् । पूषाऽ३ । रयिर्भगाः ॥ सोम ऽपुनानोअर्षताऽर३इ । पातिर्विश्वाऽ३१२३ । स्यभूऽ५मनाः ॥ वायरुभ्यद्रोऽ३१२३ ॥ दसोवा । ऊऽ५भोऽ६"हाइ ॥ श्रीः ॥ समु । प्रियाऽ३ः । अनूषता ॥ गावोमदाय-घृष्वयाऽर३ः । सोमास ऽकाऽ३१२३ । ण्वताऽ५इपथाः ॥ पावमाना-ऽ३१२३ ॥ सन्नोवा । दाऽ५वोऽ६''हाइ ॥ श्रीः ॥ यओ । जिष्ठाऽ३ः । तमाभरा ॥ पवमानश्रवायियाऽर३म् । या ऽपञ्चचाऽ३१२३ । षणाऽ५-इरभाइ ॥ रायिंयेनाऽ३१२३ । वनोवा । माऽ५होऽ६''हाइ ॥

दी. १५. उत् . न. मा. १८. वै. ॥२५१॥

१०. उक्थ्यामहीयवम् ॥ असमहीयुः । ककुप् । इन्द्रः ॥

अभ्रातृऽ३व्योअनातुवाम् । अनापाऽ१इराऽ२इ । द्रजनुषासना-
ऽ२३दसाइ ॥ यूधेदापाइ ॥ त्वमाऽ२३इच्छसाउ । वाऽ३ ॥श्रीः॥ युधेदा-
ऽ३पित्वमिच्छसाइ ॥ नकाइराऽ१इवाऽ२ । तꣳसखियायवाऽ२३इन्दसाइ ॥
पाइयन्तिताइ ॥ सुराऽ२३शुवाउ । वाऽ३ ॥श्रीः॥ पीयन्ताऽ३इतेसुराशुवाः ॥
यदाकाऽ१र्णोऽ२ । पिनदनुꣳसमूऽ२३हसाइ ॥ आदित्पिताइ ॥ वहूऽ२३-
यसाउ । वाऽ३ ॥ स्तौषेऽ३४५ ॥ दी. १२. उत्. ३. मा. २१. ज. ॥२५२॥

११. आष्टादꣳष्ट्रोत्तरम् ॥ अष्टादꣳष्ट्रः । अनुष्टुप् । इन्द्रः ॥

इन्द्रंविश्वाअवीवृधन्नैयादौ । होऽ३वा ॥ समुद्रव्यचसम् । गाइरा-
ऽ२३ः । ऐयाऽ२३त् । औऽ२३होवा ॥ रथाइतमꣳर । थाइनाऽ२३म् ।
ऐयाऽ२३त् । औऽ२३होवा ॥ वाजानाꣳसत्पतिम् । पातीऽ२३म् ।
ऐयाऽ२३त् । औऽ२३होवाऽ३४३ ॥ श्रीः ॥ सख्येतइन्द्रवाजिन-
ऐयादौ । होऽ३वा ॥ मामेमशवसः । पाताऽ२३इ । ऐयाऽ२३त् ।
औऽ२३होवा ॥ त्वामभिप्रनो । नूमाऽ२३ः । ऐयाऽ२३त् । औऽ२३होवा ॥
जेतारमपरा । जाइताऽ२३म् । ऐयाऽ२३त् । औऽ२३होवाऽ३४३ ॥श्रीः॥
पूर्वीरिन्द्रस्यरातयऐयादौ । होऽ३वा ॥ नविदस्यन्तिꣳ । तायाऽ२३ः ।
ऐयाऽ२३त् । औऽ२३होवा ॥ यदावाजस्यगो । माताऽ२३ः । ऐयाऽ२३त् ।
औऽ२३होवा ॥ स्तोतृभ्योमꣳहते । माघाऽ२३म् । ऐयाऽ२३त् । औऽ२३-
होवाऽ३४३ । ओऽ२३४५इ ॥डा॥ दी. ५१. उत्. ६. मा. ३०. कौ. २५३॥

१२ वैरूपम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

उच्चातेऽ२३४जा ॥ तमान्धाऽ३साऽ३ः । दिवाऽ२इसाऽ२३४ङ्कू । मायाऽ१दादाऽ२इ ॥ उग्राऽ२३म् ॥ शर्माऽ३४ऒहोवा ॥ महिश्रवा-ऽ२३४५ः ॥ श्रीः ॥ सनाआऽ२३४इन्द्रा ॥ ययाज्याऽ३वाऽ३इ । वरूऽ२णाऽ२३४या । मारुद्भायाऽ२ः ॥ वराऽ२३इ ॥ वोवाऽ३४-औहोवा ॥ परिस्रवाऽ२३४५ ॥ श्रीः ॥ एनावाऽ२३४इश्वा ॥ निआर्या-ऽ३आऽ३ । द्युम्नाऽ२नाऽ२३४इमा । नूषाऽ१णाऽ२म् ॥ सिषाऽ२३ ॥ सन्ताऽ३४औहोवा ॥ वनामहाऽ२३४५इ ॥

दी. ११. उत्. ६. मा. १६. घो. ॥२५४॥

१३. रौरवम् ॥ रुरुः । बृहती । पवमानस्सोमः ॥

अभिसोमासाऽ३आयाऽ२३४वाः ॥ पावन्तेमद्यंमद१समुद्रस्याधि-विष्टपेमनाऽ२इषिणाः । ओहाऽ३उवा ॥ मत्सरासोमदाऽ२३हाइ । ओहा-उवा ॥ च्युता । औऽ३होवा ॥ श्रीः ॥ मत्सरासोमाऽ३दच्यूऽ२३४ताः ॥ मात्सरासोमदच्युतस्तरत्समुद्रंपवमानऊऽ२र्मिणा । ओहाऽ३उवा ॥ राजा-देवऋताऽ२३१हाइ । ओहाऽ३उवा ॥ बृहात् । औऽ२३होवा ॥ श्रीः ॥ राजादेवआऽ३र्तम्बृऽ२३४हात् ॥ राजादेवऋतम्बृहदर्षामित्रस्यवरुणस्यधा-ऽ२मणा । ओहाऽ३उवा ॥ प्रहिन्वानऋताऽ२३१हाइ । ओहाऽ३उवा ॥ बृहात् । औऽ२३होवा । होऽ५इ ॥ डा ॥

दी. २२. उत्. ३. मा. २३. जि. ॥२५५॥

१४. त्रिणिधनमाग्नेयम् ॥ अग्निः । बृहती । पवमानस्सोमः ॥

प्रहिन्वानाः ॥ आर्तंबृऽ२३४हात् । प्रहिन्वानऋताऽ३१उवाऽ२३ ।

वृऽ२३४हात् ॥ नृभियेंऽ२३४मा ॥ गोहर्यतोविचाऽ३१उवाऽ२३ । क्षाऽ२३४णाः ॥ राजादाऽ२३४इवाः ॥ समूऽ३आउवाऽ२३॥ द्रीऽ२३४याः॥

दी. ४. उत्. २. मा. १२ था. ॥२५६॥

१५. अभीवर्तः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

आत्वाऽ३साऽ३हस्रमाशतोवा ॥ युक्तारथे । हिराण्याऽ१याऽ२इ । ब्राह्मयुजोऽ३१२३४ । हरयइ । द्रकाइशाऽ१इनाऽ२ः ॥ वहान्तूऽ१सोऽ२ ॥ मपाऽ३इ । ताऽ२३४५ ॥ याऽ२३४५इ ॥श्रीः॥ आत्वाऽ३राऽ३थाइहिरण्य-योवा ॥ हारीमयू । रशाइपाऽ१याऽ२ । शाइतिपृष्ठाऽ३१२३४ । वहताम्म । ध्वोआन्धाऽ१साऽ२ः ॥ विवाक्षाऽ१णाऽ२ ॥ स्यपाऽ३इ । ताऽ२३४५ ॥ याऽ२३४५इ ॥ श्रीः ॥ पिवाऽ३तूऽ३वस्यगिर्वणोवा ॥ सुतस्यपू । वैपाआ-ऽ१इवाऽ२ । पारिष्कृताऽ३१२३४ । स्यरसिनइ । यमाद्रूऽ१ताऽ२इः ॥ चारूमोऽ१दाऽ२ ॥ यपाऽ३ । त्याऽ२३४५ ॥ ताऽ२३४५इ ॥

दी. ११. उत्. ९. मा. २०. घौ. ॥२५७॥

१६. 'जुलुकवैष्टम्भम् ॥ विष्टम्भः । गायत्री । पवमानस्सोमः ॥

तिस्रोऽ५वा । चाऽ३उदीरताइ ॥ गावोमिम । तिधाइनाऽ१वा-ऽ२३ः । होवाऽ३हाइ ॥ हराइराऽ१इतीऽ२३ । होवाऽ३हाइ ॥ कनि । क्राऽ२दाऽ२३४औहोवा ॥ श्रीः ॥ अभाऽ५इत्र । ह्माऽ३इरनूपता ॥ याह्वी-र्ऋत । स्यमाताऽ१राऽ२३ः । होवाऽ३हाइ ॥ मर्जायाऽ१न्तीऽ२३ः । होवाऽ३हाइ ॥ दिवः । शाऽ२इशाऽ२३४औहोवा ॥ श्रीः ॥ रायाऽ५स्सम् । ऊऽ३द्राश्चतुराः ॥ आस्मभ्यंसो । मवाइश्वाऽ१ताऽ२३ः । होवाऽ३हाइ ॥

आपावाऽ१स्वाऽ२३ । होवाऽ३हाइ ॥ सह । स्ताऽ२इणाऽ२३४औहोवा ॥ दीऽ२३४शाः ॥

दी. १५. उत् . ६. मा. २७. पे. ॥२५८॥

१७. वाचस्साम ॥ वाक् । ककुप । पवमानस्सोमः ॥

आसोतापा । हो । रिपिञ्चताऽ६ए ॥ आश्वन्नस्तो । मामप्तूराऽ२म् ॥ राजस्तुरम् ॥ वानप्राक्षाऽ२३म् ॥ ऊऽ२३दाऽ३ । प्रूऽ३४५तोऽ६"हाइ ॥ श्रीः ॥ वनप्रक्षाम् । होइ । उदप्रुताऽ६मे ॥ साहस्रधा । रांवृषाभाऽ२म् । पायोदुहम् ॥ प्रायन्दाइवाऽ२३ ॥ याऽ२३जाऽ३ । न्माऽ३४५नोऽ६"हाइ ॥ श्रीः ॥ प्रियन्देवा । हो । यजन्मनाऽ६ए ॥ आर्तेनयः । आर्तजाताऽ२ः । वाइवावृधे ॥ राजादाऽ१इवाऽ२३ः ॥ आऽ२३र्ताऽ३म् । बृऽ३४५होऽ६"हाइ ॥

दी. १०. उत् . न. मा. १९. वो. ॥२५९॥

१८. सुज्ञानम् ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

सखायआ । निषीदता । पुनानायाऽ२ । प्रगायता ॥ शिशु-न्नायाऽ२ ॥ ज्ञै४प । राऽ२इभूऽ२३४औहोवा ॥ षतश्रियएऽ३ ॥ श्रीः ॥ समीवत्साम् ॥ नमातृभाइः । सृजतागाऽ२ । यसाधनाम् ॥ देवावायाऽ२म् ॥ मदम् । आऽ२भाऽ२३४औहोवा ॥ द्विशवसमेऽ३ ॥ श्रीः ॥ पुनातादा ॥ क्षसाधनाम् ॥ यथाशार्धाऽ२ । यवीतयाइ ॥ यथामाइत्राऽ२ ॥ यव । रूऽ२णाऽ२३४औहोवा ॥ यशन्तममेऽ३उपाऽ२३४५ ॥

दी. २२. उत् . १५. मा. १६. बु. ॥२६०॥

१९. दैवोदासम् ॥ दिवोदासः । उष्णिक् । पवमानस्सोमः ॥

सखाऽ३१ । यआऽ३१२३४ । निषी । दाऽ३ता ॥ पुनाऽ३१ ।

नायाऽ३१२३४ । अग्ना । याऽ३ता ॥ शिशूऽ३१म् । नयाऽ३१२३४ ।
नैॐप । राऽ३इभू ॥ षताऽ३१ । श्रियाऽ३ । ओऽ२३४वा ॥ श्रीः ॥
समीऽ३१ । वत्साऽ३१२३४म् । नमा । तुऽ३भाइः । सृजाऽ३१ ।
तागाऽ३१२३४ । यसा । घाऽ३नाम् ॥ देवाऽ३१ । वियाऽ३१२३४म् ।
मदम् । आऽ३भाइ ॥ द्विशाऽ३१ । वसाऽ३म् । ओऽ२३४वा ॥ श्रीः ॥
पुनाऽ३१ । तादाऽ३१२३४ । क्षसा । घाऽ३नाम् ॥ यथाऽ३१ । शर्धा-
ऽ३१२३४ । यवी । ताऽ३याइ ॥ यथाऽ३१ । मित्राऽ३१२३४ । यव ।
रूऽ३णा ॥ यशाऽ३१ । तमाऽ३म् । ओऽ२३४वा ॥ ऊऽ२३४पा ॥

दी. ११. उत्. न. मा. १४. ही. ॥२६१॥

२०. आन्धीगवम् ॥ अन्धीगुः । अनुष्टुप् । पवमानस्सोमः ॥

सुतासोमधुमाऽ१त्तामाः ॥ सोमाइ । द्रायाऽ२३मा । हुम्माऽ२१२ ।
दिनॐपवित्रवन्तोअक्षराऽ२३४५न् । दाइवाऽ३उवा ॥ गाऽ२च्छा । तू-
ऽ२३वो । मदा । ओऽ३होवा ॥ श्रीः ॥ इन्दुरिन्द्रायपाऽ१वाताइ ॥
इतिदे । वासोऽ२३आ । हुम्माऽ२१२ । ब्रुवन्वाचस्पतिर्मखस्यता-
ऽ२३४५इ ॥ वाइश्वाऽ३उवा ॥ स्याऽ२इशा । नाऽ२३ओ । जसा ।
औऽ३होवा ॥श्रीः॥ सहस्रधारॐपाऽ१वाताइ ॥ समुद्रः ॥ वाचाऽ२३मा ।
हुम्माऽ२१२ । खयस्सोमस्पतीरयीणाऽ१म् ॥ साखाऽ३उवा ॥ द्राऽ२स्या ।
दाऽ२३इवे । दिवा । औऽ३होवा । होऽ५इ ॥ डा ॥

दी. १५. उत्. ६. मा. १९. पो. ॥२६२॥

द्वितीयो विꣳशः ॥

इति सप्तमस्यार्द्धꣳप्रपाठकः ॥

१. सामराजम् ॥ सामराजः । जगती । पवमानस्सोमः ॥

पवौहोवा ॥ त्रन्तेविततंत्रा । ह्मणस्पाताऽ२इ । प्रभुर्गात्राणिपरियाइ ।
पिविश्वाताऽ२३ः । आताऽ३प्ताता । नूनाताऽ२३४दा । हो । मोआश्नू-
ऽ२३४ताइ ॥ होऽ३इ । शातोऽ३साईत् ॥ वाहन्ताऽ२३४स्सा । हो ।
तदाऽ३शाऽ५"ताऽ६५६ ॥ श्रीः ॥ तपौहोवा ॥ पवित्रंविततम् । दिवस्पा-
दाऽ२इ । अर्चन्तोअस्यतन्तवो । वियस्थाइराऽ२३न् । आवाऽ३न्तीया ।
स्यापावीऽ२३४ता । हो । रमाशाऽ२३४वाः ॥ होऽ३इ । दाइवाऽ३४पा-
ष्ठाम् ॥ आधीरोऽ२३४हा । हो । तिताऽ३इजाऽ५"साऽ६५६ ॥ श्रीः ॥
अरौहोवा ॥ रुचदुषसꣳपा । श्निरग्रायाऽ२ः । उन्नामिमेतिभुवनाइ ।
षुवाजायूऽ२३ः । मायाऽ३वाइनो । मामीरेऽ२३४आ । हो । स्यमाया-
२३४या ॥ होऽ३इ । नार्चाऽ३न्नासाः ॥ पाइतारोऽ२३४गा । हो ।
भमाऽ३दाऽ५"धूऽ६५६ः ॥ दी. ११. उत्. ८. मा. २७. घे. ॥८६३॥

२. अदारसृक् ॥ भरद्वाजः । गायत्री । पवमानस्सोमः ॥

हाउपवस्त्रदा ॥ क्षसाऽ२धानाऽ२ः । देवेभ्यꣳपीतयाऽ२इहा-
राऽ२इ ॥ मरूऽ२द्भ्योवाऽ२ ॥ यवे । माऽ२दाऽ२३४औहोवा ॥ श्रीः ॥
हाउसन्देवैश्शो ॥ भताऽ२इवार्षाऽ२ । कवियोनावधाऽ२इप्रायाऽ२ः ॥ पवा-
ऽ२मानाऽ२ः । अदा । भाऽ२याऽ२३४औहोवा ॥ श्रीः ॥ हाउपवमाना ॥

धियाऽ२हाइताऽ२ः । अभियोनिङ्कनाऽ२इक्रादाऽ२त् ॥ धर्माऽ२णावाऽ२ ॥ युमा । रूऽ२हाऽ२३४औहोवा ॥ अस्मभ्यङ्गातुवित्तमाऽ२३४५म् ॥

दी. २२. उत्. १०. मा. १८. बै. ॥२६४॥

३. भरद्वाजस्य पृश्नि ॥ भरद्वाजः । बृहती । पवमानस्सोमः ॥

पराइतोऽ२३षिञ्चतासुत२हाउ ॥ सोमोयउत्तम२हविः । दधान्वा२ऽ१याऽ२३ः । होवाऽ३हाइ । नारियोअ । प्सुवान्ताऽ१राऽ२३ । होवाऽ३हाइ ॥ सुषावाऽ१सोऽ२३ । होवाऽ३हा ॥ मामद्रिभिः । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

दी. ४. उत्. २. मा. १०. थौ. ॥२६५॥

४. आभीशवोत्तरम् ॥ अभीशुः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चतासुतम् । ए । ए ॥ सोमोयउऽ३त्तामर्हाविः ॥ दाऽ२३४धा । हाऽ३हाइ ॥ न्वार्योनर्योअप्स्वन्तारा ॥ सूऽ२३४षा । हाऽ३हाइ ॥ वासोममोऽ२३४वा । द्राऽ५इभोऽ६"हाइ ॥ श्रीः ॥ सुषावसोममद्रिभिरे । ए ॥ सुषावसोऽ३मामद्रिभाइः ॥ नूऽ२३४नाम् । हाऽ३हाइ ॥ पुनानोअविभिष्पारिस्रावा ॥ आऽ२३४दा । हाऽ३हाइ ॥ ब्धास्सुरभोऽ२३४वा । ताऽ५रोऽ६"हाइ ॥ श्रीः ॥ अदब्धस्सुरभिन्तरए । ए ॥ अदब्धस्सुऽ३राभिन्तारः । सूऽ२३४ते । हाऽ३हाइ ॥ चित्वाप्सुमदामोअन्धासा ॥ श्राऽ२३४इणा । हाऽ३हा ॥ तोगोभिरोऽ२३४वा । ताऽ५रोऽ६"हाइ ॥

दी. १८. उत्. न. मा. २२ रा. ॥२६६॥

५. यौधाजयम् ॥ युधाजित् । बृहती । पवमानस्सोमः ॥

श्रोणाऽ३१ । तोऽ३गो । भिः । ऊत्ताऽ२३४राम् । आइणाऽ३ । तोगोऽ२ । भिरूऽ३४५ । ताऽ२३४राम् । पराइस्वानाः । च । क्षसेदाऽ२इ । वमाऽ३४५ । दाऽ२३४नाः ॥ क्रतूऽ२ः ॥ आइन्दूऽ२ः । विचाऽ३४५ ॥ क्षाऽ२३४णाः ॥ दी. ४. उत्. २. मा. १२. था. ॥२६७॥

६. पूर्ववासिष्ठम् ॥ वसिष्ठः । त्रिष्टुप् । पवमानस्सोमः ॥

उहुवाइ । अस्याऽ३४औहोवा । प्रेषा । हेऽ३मना । पूयमानाः ॥ देवाऽ३४औहोवा । देवाइ । भीऽ३स्सम । पृक्तरसाः ॥ सुताऽ३४औहोवा । पवाइ । त्राऽ३म्परि । एतिरेभान् ॥ मिताऽ३४औहोवा । वसा । ब्राऽ३पशु । माऽ३४३ । तीऽ३होऽ५"ताऽ६५६ ॥ श्रीः ॥ भद्राऽ३४औहोवा । वस्त्रा । समनि । यावसानाः ॥ महाऽ३४औहोवा । कवाइः । निवच । नानिशंसान् ॥ आवाऽ३४औहोवा । च्यस्वा । चमुवोः । पूयमानाः ॥ विचाऽ३४औहोवा । क्षणो । जागृविः । दाऽ३४३इ । वाऽ३वा५इ"ताऽ६५६उ ॥ श्रीः ॥ समूऽ३४औहोवा । प्रियो । मृज्यते । सानोअव्याइ ॥ यशाऽ३४औहोवा । स्तरो । यशसाम् । क्षैतोअस्माइ ॥ अभाऽ३४औहोवा । स्वरा । घनुवा । पूयमानाः ॥ उहुवाइ । यूयाऽ३४औहोवा । पाता । सुवस्ति । भाऽ३४३इः । साऽ३दाऽ५"नाऽ६५६ः ॥

दी. ३८. उत्. ८. मा. ३८. डै ॥२६८॥

७. अभीवर्तः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

योराऽ३जाऽ३चर्षणीनोवा ॥ यातारथे । भिराध्राऽ१इगूऽ२ः । वाइश्वासाऽ३१२३४म् । तरुता । पृतानाऽ१नाऽ२म् ॥ ज्येष्ठांयोऽ१वाऽ२ ॥

त्रहाऽ३ । गाऽ२३४५ ॥ णाऽ२३४५इ ॥ श्रीः ॥ ज्येष्ठाऽ३म्योऽ३वृत्रहा-
गृणोवा ॥ ज्याइष्ठंयोवृ । त्रहागाऽ१र्णाऽ२इ । आइन्द्रन्तꣳशूऽ३१२३४ ।
भपुरुह । न्मन्नावाऽ१साऽ२इ ॥ येस्याद्वाऽ१इताऽ२ ॥ विघाऽ३ । ता-
ऽ२३४५ ॥ राऽ२३४५इ ॥ श्रीः ॥ यस्याऽ३द्वाऽ३इताविधर्तरोवा ॥

यास्यद्विता । विघार्ताऽ१राऽ२इ । हास्तेनवाऽ३१२३४ । व्रꣳप्रतिधा ।
यिदार्शाऽ१ताऽ२ः ॥ महान्दाऽ१इवाऽ२ः ॥ नसूऽ३ । राऽ२३४५ ॥
याऽ२३४५ः ॥ दी. १३. उत्. ९. मा. १८. ढै. ॥२६९॥

८. [1]और्णायवाद्यम् ॥ ऊर्णायुः । गायत्री । पवमानस्सोमः ॥

परिप्रियादिवꣳकावीः ॥ वयाꣳसिनाप्त्योर्हिताः॥ स्वानैर्याऽ२३ती ॥
आयाऽ२ । इयाऽ२ईऽ३या । कविक्रतोऽ२ । याऽ२३४औहोवा ॥ श्रीः ॥
सस्नुर्मातिराशूचीः ॥ जातोजातेअरोचयात् ॥ महान्माऽ२३ही ॥ आयाऽ२ ।
इयाऽ२ईऽ३या । ऋतावृधोऽ२ । याऽ२३४औहोवा ॥ श्रीः ॥ प्रप्रक्षया-
यपन्यासाइ ॥ जनायजुष्टोअद्रुहः ॥ वीतियाऽ२३र्षा ॥ आयाऽ२ ।
इयाऽ२ईऽ३या । पनिष्टयोऽ२ । याऽ२३४औहोवा ॥ ईऽ२३४५ ॥
दी २५. उत्. ३. मा. १४. बी. ॥२७०॥

९. [2]सुज्ञानम् ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

सोमꣳपुना ॥ नऊर्मिणा । अव्यंवाराऽ२म् । विधावताइ ॥
अग्रेवाचाऽ२ः ॥ पवा । माऽ२नाऽ२३४औहोवा ॥ कनिक्रददेऽ३ ॥श्रीः॥
धीभिर्मृजा ॥ तिवाजिनाम् । वनेक्राइडाऽ२ । तमत्यवाइम् ॥ अभित्राइपाऽ२ ॥
ष्ठंम । ताऽ२याऽ२३४औहोवा ॥ समस्वरन्नेऽ३ ॥ श्रीः ॥ असर्जिका ॥

लशाᳲअभाइ । मीढ्वान्त्साप्ता॒ऽ२इः । नवाजयूः ॥ पुनानोवाऽ२ ॥ चञ्च ।
नाऽ२याऽ२३४औहोवा ॥ असिष्यदद्देऽ३उपाऽ२३४५ ॥

दी. १८. उत्. १५. मा. १८. खौ. ॥२७१॥

१०. ऊर्ध्वेडन्त्वाष्ट्रीसाम ॥ त्वाष्ट्रयः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोअन्धसाः ॥ सुताऽ२यमाऽ२ । दयाऽ३४५इ । लाऽ२३४वे । अपश्वानᳲश्नथिष्टनाऽ२३४५ ॥ सखायोदाइ ॥ घजिह्वाऽ२३याऽ३४३म् ॥ श्रीः ॥ सखायोदीर्घजिह्वियाम् ॥ योधाऽ२रयाऽ२ । पावाऽ३४५ । काऽ२३४या । परिप्रस्यन्दतेसुताऽ१ः ॥ इन्दुरश्वाः ॥ नकृत्वाऽ२३याऽ३४३ः ॥ श्रीः ॥ इन्दुरश्वोनकृत्वियाः ॥ तान्दूऽ२रोषाऽ२म् । अभाऽ३४५इ । नाऽ२३४राः । सोमंविश्वाचियाधियाऽ१ ॥ यज्ञायसा ॥ तुवद्राऽ२३याऽ३४३ः । ओऽ२३४५इ ॥ डा ॥

दी. १७. उत्. ५. मा. १५. त्रु ॥२७२॥

११. लौशाद्यम् ॥ लुशः । जगती । पवमानस्सोमः ॥

प्रोअयासीत् । इन्दुरिन्द्राऽ२३ । स्याऽ३निष्कृतम् ॥ सखासख्युः । नप्रमिनाऽ२३ । तीऽ३सङ्गिरम् ॥ मर्यइव । युवतिभाऽ२३इः । साऽ३मर्षति ॥ सोमᳲकला । शेशतयाऽ२३ । मनाऽ३पाऽ५"थाऽ६५६ ॥श्रीः॥ प्रवोधियः । मन्द्रयुवोऽ२३ । वाऽ३इपन्युवः ॥ पनस्युवः । संवरणाऽ२३इ । षूऽ३वक्रमुः ॥ हरिङ्क्रीड । तमभ्यनूऽ२३ । षाऽ३तस्तुभः ॥ अभिधेना । वᳲपयसाऽ२३इत् । अशाऽ३इश्राऽ५"यूऽ६५६ः ॥ श्रीः ॥ आनस्सोम । संयतंपाऽ२३इ । प्यूऽ३षीमिषम् ॥ इन्दोपव । स्वपवमाऽ२३ । नाऽ३-

ऊर्मिणा ।। यानोदोह । तेत्रिरहाऽ२३न् । आऽ३सश्चुषी ।। क्षुमद्वाजा ।
वन्मधुमाऽ२३त् । सुवाऽ३इराऽ५''याऽ६५६म् ।।

दी. २१. उत्. न. मा. २६. हू. ।।२७३।।

१२. शुद्धाशुद्धीयम् ।। इन्द्रः । अनुष्टुप् । इन्द्रः ।।

एतोन्विन्द्रँस्तवाऽ३मा ।। शुद्धँशुद्धे । न । साम्नाऽ२ । शुद्धा-इरूऽ३क्थाऽ३इः । वावाऽ२ध्वाँऽ२३४ँसाम् ।। शुद्धैराऽ२३शी ।। वान्म-मत्तु । इडाऽ२३ ।।श्रीः।। इन्द्रशुद्धोनआगाऽ३ही ।। शुद्धश्शुद्धा । भिरू । ताइभाऽ२इः । शुद्धोराऽ३यीऽ३म् । निधाऽ२राऽ२३४या ।। शुद्धोमाऽ२३मा । धीसोमिय । इडाऽ२३ ।। श्रीः ।। इन्द्रशुद्धोहिनोराऽ३यीम् ।। शुद्धोरत्ना । निदा । शूषाऽ२इ । शुद्धोवाऽ३त्रोऽ३ । खिजाऽ२इम्नाऽ२३४साइ । शुद्धो-वाऽ२३जाम् ।। साइषासासि । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ।।डा।।

दी. १५. उत्. ६. मा. १६. पू. ।।२७४।।

१३. सन्तनि ।। देवाः । गायत्री । पवमानस्सोमः ।।

अर्षाहाउ ।। सोमद्युमाऽ३१उवाऽ२३ । ताऽ२३४माः । अभि-द्रोणानिरोरुवाऽ२३४५त् ।। सीदान्हाउ ।। योनौवनाऽ३१उवाऽ२३इ ।। षूऽ२३४वा ।। श्रीः ।। अप्साइन्द्रायवायवेवरुणायमरुद्भियाऽ२३४५ः ।। सोमाहाउ ।। आर्षन्तुवाऽ३१उवाऽ२३इ ।। ष्णाऽ२३४वे ।। श्रीः ।। इषन्तो-कायनोदधदस्मभ्यँसोमविश्वताऽ२३४५ः ।। आपाहाउ ।। वास्वसहाऽ३१-उवाऽ२३ ।। स्रीऽ२३४णाम् ।।

दी. १६. उत्. २. मा. १६. खू. ।।२७५।।

१४. मानवोत्तरम् ।। मनुः । बृहती । पवमानस्सोमः ।।

होवाइ । अभिसोमासआयवः । होवाइ ।। पावन्तेमद्यंमदम् ।

सामुद्रस्या । घाइविष्टपाऽ३१इ । मनाऽ२इषाऽ२३४इणाः ।। मत्साराऽ२३-
साऽ३ः ।। माऽ२दाऽ२३४औहोवा ।। च्यूऽ२३४ताः ।। श्रीः ।। होवाइ ।
मत्सरासोमदच्युतः । होवाइ ।। मात्सरासोमदच्युतः । तारत्समु । द्राम्प-
वमाऽ३१ । नऊऽ२मीऽ२३४इणा ।। राजादाऽ२३इवाऽ३ः ।। आऽ२र्त्ता-
ऽ२३४औहोवा ।। बृऽ२३४हात् ।। श्रीः ।। होवाइ । राजादेवऋतंबृहत् ।
होवाइ ।। राजादेवऋतंबृहत् । अर्षामित्र । स्यावरुणाऽ३१ । स्यधाऽ२-
र्मीऽ२३४णा ।। प्रहाइन्वाऽ२३नाऽ३ः ।। आऽ२र्त्ताऽ२३४औहोवा ।।
बृऽ२३४हात् ।। दी. २२. उत्. ५. मा. ३३. चि. ।।२७६।।

१५. आनूपंवाभ्रयश्वम् ।। आनूपः । बृहती । पवमानस्सोमः ।।

अभीअभी ।। सोमासऽ३आयाऽ१वाऽ२ः । पावन्तेम । दियांमा-
ऽ१दाऽ२म् । सामूऽ२द्रास्याऽ२ । धिविष्टपेमनीषाऽ२३इणाः ।। मत्सारा-
ऽ३साऽ३ः ।। माऽ२३दाऽ३ । च्यूऽ३४५तोऽ६"हाइ ।।श्रीः।। मत्सामत्सा ।।
रासोमऽ३दाच्यूऽ१ताऽ२ः । मात्सरासः । मदाच्यूऽ१तारः । ताराऽ२-
त्सामूऽ२ । द्रंपवमानऊर्मीऽ२३इणा ।। राजादाऽ३इवाऽ३ः ।। आऽ२३-
र्ताऽ३म् । बृऽ३४५होऽ६"हाइ ।। श्रीः ।। राजाराजा ।। देवऋऽ३तांबृऽ१-
हाऽ२त् । राजादेवः । ऋतांबृऽ१हाऽ२त् । आर्षाऽ२माइत्राऽ२ । स्यवरु-
णस्यधर्माऽ२३णा ।। प्रहाइन्वाऽ३नाऽ३ः ।। आऽ२३र्ताऽ३म् । बृऽ३४५-
होऽ६"हाइ ।। दी. १६. उत्. ३. मा. १६. गू. ।।२७७।।

